विश्वदानीमाभरन्तो[1] ऽनातुरेण मनसा ।
अग्ने मा ते प्रतिवेशा रिषाम ॥

इत्याहवनीयं परान्मे शंस्याजुगुप्तं इति च । प्रजां मे नर्याजुगुप्तं इति गार्हपत्यमन्नं म पुष्याजुगुप्तं इति दक्षिणाग्निं[2] सप्रथ· सभा मे ऽजुगुपस्तां मे पुनर्देहीति[3] सभ्यमहिर्बुध्न्य मन्त्रं मे ऽजुगुपस्तं मे पुनर्देहीत्यावसथ्यम् ॥ ३६ ॥ इमान्मे मित्रावरुणौ गृहानजुगुप्तं[4] युवं-मित्यन्तराग्नी तिष्ठन्जपति ॥ ३७ ॥

मम च नाम तव च जातवेदो वाससी इव विवसानौ चराव ।
ते विमृतो महसे जीवसे च यथायथं नौ तन्वौ जातवेद ॥

इत्याहवनीयम् ॥ ३८ ॥ नव रात्रीः पराचीः प्रोष्याहुतिं[5] जुहोति—
विश्वकर्मन्[6]हविषा घृतेन विच्छिन्नं यज्ञं समिमं दधातु ।
या इष्टा उषसो याश्च याज्यास्ता संदधामि मनसा घृतेन[8] ॥

इति ॥ ३९ ॥ नव रात्रीः पराचीः[9] उषित्वा सहगृहः[10] प्रयास्यन्चक्रावत्सु[11] वास्तोष्पत्यं जुहोति[12] ॥ ४० ॥ न हीनमन्वाहरेयुः[12] ॥ ४१ ॥ अमीवहा वास्तोष्पते[13] ॥ वास्तोष्पते इत्येताभ्यामाहुती[14] हुत्वायं ते योनिरृत्वियः इत्यरण्योरग्नीन् समारोपयति गार्हपत्याहवनीयौ गतश्रियो गार्हपत्यमगतश्रियः ॥ ४२ ॥ दक्षिणाग्निर्यदि मथ्यैः[15] समारोपयेत् ॥ ४३ ॥ यद्यरण्योर्नाशमाशङ्केत सचेहि या ते[16] यज्ञिया तनूस्तयेमारोहेत्यात्मनि विहारं समारोपयति ॥ ४४ ॥ न सहाग्निर्भूते गृहेभ्यः प्रवसेत् ॥ ४५ ॥ नासंदह्यावक्षाणानि[17] प्रयायात् ॥ ४६ ॥

उपावरोह जातवेदो[18] देवेभ्यो हव्यं वहतु प्रजानन् ।

1 The ms आरभन्तो.
2 MS I, 5 14
3 In the previous mantras °पुनर्देहि was not added, because of their being *pratikas from the Saṃhitā*.
4 The Saṃhitā (ib 84 9) गृहान्जुगुप्तं.
5 The ms °हुतीर्.
6 We expect the nominative.
7 The ms यारेज्या°, thus retaining a trace of the Saṃhitā accent.
8 Except for the first word the verse is MS I. 7. 1. 109. 8.
9 The ms रात्रीष्पराचो- first hand, रात्रीः पराचीः second hand.
10 The ms सगृहं
11 ? Perhaps to be read as चक्रीवत्सु.
12 Cp MS I 5. 13 82 8.
13 MS ib 11–14.
14 MS I 5. 1. 66 4.
15 The ms मथ्य
16 The ms सत्वेधाते first hand, सत्वेयाते second hand. Other Śrautasūtras also have corrupt readings. See KapKath Saṃhitā I 16 12. 13 and the note thereon.
17 The ms नासदग्नावक्षाणेति.
18 The ms second hand adds पुनस्त्वं.

आयुः प्रजाँ रयिमस्मासु धेह्यरिष्टो[1] दीदिहि नो दुरोणे।
इत्युपावरोह्य मन्थेत् ॥

इति पुनराधाने [पञ्चमे ऽध्याये] चतुर्थं खण्डम् ॥

श्यामाकान्युमुत्समाणः पुराणानाँ व्रीहीणामाग्नेयमष्टाकपालं निर्वपे-त्सौम्यं च श्यामाकं चरुम् ॥ १ ॥ बभ्रुः पिशङ्गो दक्षिणा वसनँ वा ॥ २ ॥ व्रीही-णामग्रपाकस्य यजते यवानां च ॥ ३ ॥ नानिष्ट्वाग्रायणेन नवस्याश्नीते ॥ ४ ॥ ऐन्द्राग्नमेकादशकपालं निर्वपेदाग्नेन्द्रँ वा ॥ ५ ॥ वैश्वदेवः पयसि चरुः श्यामा-कश्चरुः । न यवाग्रायणे । द्यावापृथिवीय एककपालं इति हवीँषि[3] ॥ ६ ॥ पुरस्तात्स्विष्टकृतो ऽज्यानीर्जुहोति[4]—

शतायुधाय शतवीर्याय शतोतये ऽभिमातिषाहे ।
शतँ यो नः शरदो ऽजयदिन्द्रो [ विश्वस्य ] दुरितस्य पारँ स्वाहा ॥
ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ।
तेषामज्यानी[2] यतमो न आवहत्तस्मै नो देवाः परिदत्त सर्वे स्वाहा ॥
वसन्तो ग्रीष्मो मधुमन्ति वर्षाः शरद्धेमन्तः सुविते दधात नः ।
तेषाँ वयँ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम स्वाहा ॥
स्वस्ति सँवत्सराय परिवत्सरायेदावत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
तेषाँ वयँ सुमतौ यज्ञियाना निवात एषामभये स्याम स्वाहा ॥
इयँ स्वस्ति सँवत्सरीया परिवत्सरीयेदावत्सरीयोद्वत्सरीया ।
सा नः पिपर्त्वंहरणीयमानेनाहेदद्धारम(?)शीय स्वाहा ॥[5]
इति । आ नः प्रजा जनयत्विति[6] षष्ठी ॥ ७ ॥ इडां भक्षयति—
भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितुराविवेश शिवस्तोकाय तन्वो न एधि ॥
इति व्रीहीणाम् ।
अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥

1 The ms °रिष्टा first hand, धेह्यजस्रो second hand, Cp ŚānkhŚr II. 17. 8.

2 Based on KS XII. 7 169 21-22.

3 The sense is not clear The ms यावापृथिवीय द्यावापृथिवीय एकादशकपाल first hand, द्यावापृथिव्यं यद्यावापृथिवीय एकादशकपाल second hand.

4 Cp Mān I. 6. 4. 21 षडाज्याहुतीर्जुहोति.

5 In these verses the ms second hand has made certain changes after the Taittirīyas. For the text above see KS XIII. 15: 197. 20 sqq. Mān ib.

6 MS II. 13. 23: 169. 4.

इति श्यामाकानाम् ।

एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः ।
इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः ॥

इति यवानाम् ॥ ८ ॥ वत्सः प्रथमजो दक्षिणा वत्सः प्रथमजो
ण्णा ॥ ९ ॥

इति पुनराधाने [ पञ्चमे ऽध्याये ] पञ्चमं खण्डम् ॥

इति पञ्चमो ऽध्यायः ॥

उद्गयनस्याद्यन्तयोरैन्द्राग्नेन पशुना यजेत संवत्सरे संवत्सरे वा ॥ १ ॥ षड्ढोत्रा मनसा जुहोति—वाग्घोता दीक्षा पत्न्यापो ऽध्वर्युर्वातो ऽभिगरः प्राणो हविर्मनो ब्रह्मा तपसि जुहोमि स्वाहेति ॥ २ ॥ प्रहेणं द्वितीयाम्—वाचस्पते अच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवावृधं होत्रामैरयं स्वाहेति ॥ ३ ॥ आग्नावैष्णवमेकादशकपालं निर्वपति वैष्णवीं[1] वा पूर्णाहुतिम् ॥ ४ ॥ उरु विष्णो विक्रमस्वेति[2] वैष्णव्या हुत्वा यूपमच्छैति[3] बिल्वपलाशखदिररोहितकोदुम्बराणामेकम् ॥ ५ ॥ बैल्वं ब्रह्मवर्चसकामः[4] कुर्वीत ॥ ६ ॥ पञ्चारत्न्यादिप्रमाणमनोधिशाख्यमृजुमूर्ध्वशल्कमुपरिष्टादुपावनतं[5] बहुपलाशशाखमप्रतिशुष्काग्रं प्राञ्चं प्रत्यञ्चं वाहानम् ॥ ७ ॥ अत्यन्यानगामित्येनमभिमन्त्र्य विष्णवे त्वेत्याज्येन पर्यनक्ति[6] ॥ ८ ॥ ओषधे त्रायस्वैनमिति[7] दर्भमन्तर्दधाति ॥ ९ ॥ स्वधिते मैनं हिंसीरिति[8] परशुना प्रहरति ॥ १० ॥ प्रथमशल्कमुपयम्य भूमिसमं वृश्चति ॥ ११ ॥ यं त्वामयं स्वधितिरिति[9] प्राञ्चं प्रह्लापयति[10] ॥ १२ ॥ वनस्पते शतवल्शो विरोहेत्यैनमश्वने जुहोति ॥ १३ ॥ सहस्रवल्शा इत्यात्मानं प्रत्यभिमृशति ॥ १४ ॥ अष्टाश्रिं तक्षति गोपुच्छमतष्टमूलम् ॥ १५ ॥ अग्रतो ऽग्निष्ठां पृष्ठतः सूर्यस्थाम् ॥ १६ ॥ अग्रस्य चषालं पृथमात्रमष्टाश्रि मध्ये संगृहीतम् ॥ १७ ॥ इध्माबर्हिः संनह्य वेदं कृत्वा रथमात्रीं[11] वेदिं करोति शम्यामात्रीमुत्तरवेदिम् ॥ १८ ॥ यत्प्रागुत्तरस्मात्परिग्राहात्तत्कृत्वा सावित्रेणाभ्रिमादायाभ्रिरसि नारिरसीत्येनमभिमन्त्र्योत्तरत उत्तरवेद्यन्तात्प्रक्रममात्रे चात्वालं परिलिखति—तप्तायनी मे ऽसीति[12]

1 ? The ms अद्देति first hand, सप्रहं जुहोति second hand.
2 MS I. 2. 13 22. 8.
3 Cp TS VI. 3. 3. 1 वैष्णव्यर्चा हुत्वा यूपमच्छैति.
4 Based on MS III. 9. 3 116. 14.
5 See MS III. 9. 2. 115. 2 sqq.
6 Ib 114. 14–15.
7 MS I. 2. 14.
8 From MS III. 9. 2; 114 12.
9 The ms प्रातर्यतीति. See MS III. 9. 3 116. 1.
10 ? The ms यत्प्रागुत्तरेस्यस्य परिग्राहेभ्यस्तत्कृत्वा.
11 MS I. 2. 10 19. 15.
12 MS I. 2. [illegible] 17. 8.

पर्यायैर्दिक्षु शम्यां निधायानुशम्यमभ्रया व्यवलिखति ॥ १९ ॥ आनुदघ्नं चतुरश्रं खात्वोत्तरवेद्यै पांसून्हरति ॥ २० ॥ विदेरग्ने इति खनति ॥ २१ ॥ अग्ने अङ्गिर इत्यवदार्य वसवस्त्वा हरन्त्विति हरति ॥ २२ ॥ वित्स यज्ञपतेरिति पश्चाद्यूपावटस्य निवपति ॥ २३ ॥ एतेन धर्मेणोत्तराभ्यां पर्यायाभ्यां त्रिर्यजुषा हरति तूष्णीं चतुर्थम् ॥ २४ ॥ समानः खननो निवपनश्च ॥ २५ ॥ देवेभ्य प्रथस्वेत्युत्तरवेदिं प्रथयति ॥ २६ ॥ देवेभ्य कल्पयस्वेति कल्पयति ॥ २७ ॥ चतुरश्रामुत्तरवेद्यां प्रादेशमात्रीं नाभिं कृत्वा सिंहीरसि महिषीरसीत्यभिमन्त्र्य देवेभ्य शुन्धस्वेत्युत्तरवेदिं प्रोक्षति ॥ २८ ॥ देवेभ्य शुम्भस्वेति सिकताभिः प्ररोचयति ॥ २९ ॥ अद्भिर्निःसारयति संततामुदकधारां स्रावयन्स्फ्येन यन्मं कृत्वा समयोत्तरावसावपो ऽभि निर्वहतेति ॥ ३० ॥ प्रोक्षणीः संस्कृत्योत्तरवेदिं प्रोक्षति—इन्द्रघोषास्त्वेति पर्यायैरनुपरिक्रामन् ॥ ३१ ॥ पितृणा भागधेयी स्थेति दक्षिणत उत्तरवेद्याः प्रोक्षणीशेषं निनीय पञ्चगृहीतेनाज्येनोत्तरवेदिं व्याघारयति हिरण्यं निधाय—सिंहीरसि सपत्नसाही स्वाहेति पर्यायैरक्ष्णया श्रोणयंसेषु ॥ ३२ ॥ मध्ये पञ्चमेन ॥ ३३ ॥ भूतेभ्यस्त्वेति निरुदोषी स्रुचमुद्दिशति ॥ ३४ ॥ नाभ्यां पीतुद्रयान्परिधीन्परिदधाति प्रादेशमात्रान्—विश्वायुरसीति पर्यायैः ॥ ३५ ॥ अवेर्नाकिञ्चस्तुकस्यान्तरा भृङ्गाद्गूर्णास्तुकां केरुगुल्गुलिथिति नाभ्यां संभारान्निवपति ॥ ३६ ॥ अग्ने भेत्तासीति पर्यायैर्विभाद् बृहदित्यान्तादनुयाकस्योत्तरवेदिमभिमृश्याहवनीयादग्निं प्रणयति ॥ ३७ ॥

इति पशुषु [ षष्ठे ऽध्याये ] प्रथमं खण्डम् ॥

यत्ते पावक चक्रमा कच्चिदागः पूर्वो य सन्नपरो भवाति ।
घृतेनाग्ने तन्वं वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात् ॥

इत्युपस्थे ऽग्नावाहवनीये जुहोति ॥ १ ॥ अग्नये प्रणीयमानायानुब्रूहीति संप्रेष्यति ॥ २ ॥ उपयच्छन्त्युपयमनीः ॥ ३ ॥ ऊर्णम्रदसमित्युच्यमाने

यज्ञ प्रत्यङ्गारस्तुभानि सुमेधा आ त्वा वसूनि पुरोधाहन्ति ।
दीर्घमायुर्यजमानाय कृण्वन्नथामृतेन जरितारमङ्ग्धि ॥

1 The ms ॰मभ्राव्यव॰ first hand, ॰मभ्रया व्यव॰ second hand

2 MS III 8, 5 100 3

3 Instead of ॰वेद्या

4 MS I, 2, 8.

5 We expect इत्यवदाय. Cp Hir IV 3 402 पांसूनपादत्ते.

6 See KS XXV 6 109 16

7 ! Cp Man I 7, 3 24, Āp VII, 4 5.

8 The ms अवेद॰

9 ! The ms second hand केरुगुलान्विति.

10 MS IV, 10 4 152 4

11 The ms second hand follows in its variations the Taittirīyas.

इति संभारेष्वध्वर्युरग्निं सादयति ॥ ४ ॥ यस्मादधि प्रणयाति तस्मिन्गार्हपत्यकर्माणि कुर्वीताग्निहोत्रं च जुहुयादौत्तरवेदिके ॥ ५ ॥ वरुणप्रघासेष्वग्निहोत्रं प्रणयनी पूर्णाहुतिरिति यथाग्न्याधेये[1] ॥ ६ ॥ अतिमुक्तीर्जुहोति —

अग्निर्यज्ञं नयतु प्रजानन्मैनं यज्ञहनो विदन् ।
देवेभ्यो यज्ञं नयतात्प्र यज्ञपतिं तिर स्वाहा ॥

इति । वायुः सूर्यो यज्ञं नयत्विति समानम् ॥ ७ ॥ प्रणीते ऽग्न्यन्वाधानं[2] व्रतोपायनम् ॥ ८ ॥ पाणिप्रक्षालनप्रभृति समानमा पात्रप्रयोगात् ॥ ९ ॥ एकादशकपालः पुरोडाशो द्वादशकपालो वा ॥ १० ॥ द्वे जुहू वसाहोमहवनी द्वितीया । द्वे उपभृतौ पृषदाज्यधानी द्वितीया । द्वे आज्यस्थाल्यौ । यूपशल्कम् । शूलम् । पयस्याम्[3] । काष्मर्यमय्यौ वपाश्रपण्यौ । द्विशूलैकशूले । औदुम्बरमास्यदघ्नं मैत्रावरुणदण्डम् । दर्भाणां रशने द्विगुणां द्विव्यायामां त्रिगुणां त्रिव्यायामाँ[4] संसाद्य प्रोक्ष्य पात्राण्याज्यं निर्वपति दधि च ॥ ११ ॥ पृषदाज्यधर्मैर्दधि संस्करोत्युपभृद्धर्मैः[5] पृषदाज्यधानीं पात्राणि च पात्रधर्मैः द्वितीयानि ॥ १२ ॥ स्रुच्यप्रक्षालनप्रभृति समानमाज्यग्रहेभ्यः[6] ॥ १३ ॥ चतुरुपभृति गृहीत्वा पञ्चगृहीतं पृषदाज्यधान्यामाज्येन संनीय महीनां पयो ऽसि विश्वेषां देवानां तनूरसि[7] । ऋध्यासमद्य पृषतीनां ग्रहम् । पृषतीनां ग्रहो ऽसि विष्णोर्हृदयमसीति पर्यायैः[8] ॥ १४ ॥ सर्वेष्वाज्येषु यूपावटं परिलिखति—इदमहं रक्षसो ग्रीवा अपिकृन्तामीति[9] पूर्वस्य वेद्यन्तस्य मध्ये ऽर्धमन्तर्वेद्यर्धं बहिर्वेदि ॥ १५ ॥ उत्तरतश्चत्वालस्य शामित्रलक्षणमुद्धन्ति ॥ १६ ॥

इति पशुषु [षष्ठे ऽध्याये] द्वितीयं खण्डम् ॥

यत्ते शोचिः परावधीत्तया हस्तेन वास्या ।
आपस्तत्तावकाः शुन्धन्तु शुचयः शुचिम् ॥

इति खातं यूपं तीर्थेनोपसाद्य तूष्णीकाँ[10] यवमतीः प्रोक्षणीः संस्कृत्य

1 The sense of the passage is not clear.

2 The ms प्रणीतेऽभिन्वाधानव्रतोपा॰ first hand, प्रणीते ऽग्नीन्परिस्तीर्याधानव्रतोपा॰ second hand.

3 The ms पशुश्रपिणाम् first hand, उद्धराणाम् second hand.

4 In this sūtra the nominatives are mixed up with accusatives. The ms second hand corrects all the nominatives into accusatives.

5 The ms संस्कृत्यादुप॰ first hand, संस्कुर्यादुप॰ second hand.

6 The ms समानमाज्यधर्मैर्महेभ्य..

7 The sentence is not complete.

8 MS I. 2. 10: 19. 15.

9 The ms second hand after Āp VII. 9. 9.

10 Thus also I. 1. 1. 27.

यूपं प्रोक्षति—पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् । शुन्धन्तां लोकाः इति यूपावटम् ॥ १ ॥ यवो ऽसीति यवानवदधाति ॥ २ ॥ पितृषदनं त्वेति दर्भैरवस्तृणाति ॥ ३ ॥ स्वावेशो ऽसीति प्रथमशकलमवधाय घृतेन द्यावापृथिवी इति स्रुवेणाभिजुहोति ॥ ४ ॥ पुरस्तात्प्रत्यङ्ङ् यजमानो यूपमनक्ति ॥ ५ ॥ यूपायाज्यमानायानुब्रूहीति संप्रेष्यति ॥ ६ ॥ आन्तमविच्छिन्नमनक्ति ॥ ७ ॥ देवस्त्वा सविता मध्वानक्त्विति यूपाग्रमनक्ति । सर्वं सहचषालमनक्ति—इन्द्रस्य चषालमसीति ॥ ८ ॥ चषालं प्रतिमुच्य सुपिप्पला ओषधीरित्यङ्गुलिमात्रमूर्ध्वं चषालाद्यूपाग्रं कनीयो वा ॥ ९ ॥ यूपायोच्छ्रीयमाणायानुब्रूहीति संप्रेष्यति ॥ १० ॥ दिवमग्रेणोत्तमानेत्युच्छ्रयति ॥ ११ ॥ ता ते धामानीत्यवदधाति ॥ १२ ॥ विष्णोः कर्माणीत्यवस्थापयत्यग्निमभिमुखीमग्निष्ठाम् ॥ १३ ॥ न तष्टस्य निखनति ॥ १४ ॥ नातष्टस्याधिः करोतीति ॥ १५ ॥ ब्रह्मवनिं त्वेति पांसुभिः परिवपति ॥ १६ ॥ ब्रह्म दृंह क्षत्रं दृंहेति यजमानो मैत्रावरुणदण्डेन परिदृंहयति ॥ १७ ॥ प्रोक्षणीशेषेण परिषिच्य तद्विष्णोरिति स्वरुशकलेन समुन्मार्ष्टि ॥ १८ ॥ दिवीव चक्षुराततमिति संमितमभिमन्त्रयते ॥ १९ ॥ त्रिवृता यूपं परिव्ययत्यग्रतो रशनायाः शिरः परिहरणाय यूपायावशिष्य शेषं द्वैधं संभुज्योत्तरतः सूर्यस्यावृता नाभिमात्रे संभोगं प्रतिष्ठाप्य यूपाय परिवीयमाणायानुब्रूहीति संप्रेष्यति ॥ २० ॥ परिवीरसीति त्रिः परिव्ययत्युत्तरमुत्तरं प्रदक्षिणं संभोगे रशनाग्रमतिहृत्य मूलतो निरायम्यान्तात्प्रवेष्टयति ॥ २१ ॥ अणीयसीं स्वर्यायस्युपकर्षति ॥ २२ ॥ यदि कामयेत वर्षेत्पर्जन्य इति ॥ २३ ॥ अञ्जनादि यजमानो यूपं नापरिधीतमवसृजति ॥ २४ ॥ दिव सानूपेत्युत्तमे रशनागुणे स्वरुमुपकल्प्याजमुपाकरोति श्वेतं लोहितं द्विरूपं वा श्मश्रुलम् ॥ २५ ॥ कूटाकर्णकाणखण्डवण्डाण्डदन्त इति प्रतिषिद्धाः ॥ २६ ॥ उत्तरतो यूपस्य प्रत्यञ्चं पशुमवस्थाप्याहुती जुहोति ॥ २७ ॥

इति पशुषु [ षष्ठे ऽध्याये ] तृतीयं खण्डम् ॥

प्रजापतेर्जायमाना प्रजा जाताश्च या इमाः ।

1 MS I 2, 11
2 MS I, 2 14
3 Here the ms adds यजमानो मत्रावरुण दंड परिदृहति
4 Cp MS III 9 4 119, 4, Man I 6 1 17, Āp VII 3 6
5 Cp MS ib 118, 6, Āp VII, 10, 13
6 We expect here इति ब्राह्मणव्याख्यातम् (MS III, 9, 4 118, 14)
7 The ms अंजनादीन् Cp Āp VII, 10 5
8 Based on KS XXVI, 6 128, 15.
9 Thus the ms second hand. The first hand °काणखण्डवंडाण्डदन्त Cp MS III 9 5 122 4.
10 The ms °हुतीर्.

ता अस्मै प्रतिवेदय चिकित्वमनुमन्यताम्[1] ॥

इमं पशुं पशुपते ते ऽद्य बध्नाम्यग्ने सलिलस्य[2] मध्ये ।

अनुमन्यस्व सुयजा यजेह[3] जुष्टं देवेभ्य इदमस्तु हव्यम् ॥

इति ॥ १ ॥ इषे त्वेति दर्भावादत्ते ॥ २ ॥ उपावीरसीति प्लक्षशाखां हरिणीं पलाशवतीम् ॥ ३ ॥ तया दर्भाभ्यां च पशुमुपाकरोति—उपो देवानिति ॥ ४ ॥ प्रत्यञ्चं पशुमनुमार्ष्टि—अमुष्मै त्वा जुष्टमिति यथादेवतम् ॥ ५ ॥ अभिधानप्रोक्षणयपोत्क्लेदनाभिघारणेषु ॥ ६ ॥ पश्चान्मध्यमस्य परिधेरधिमन्थनं शकलं प्रयुनक्ति—अग्नेर्जनित्रमसीति वृषणौ स्थ इत्यप्रच्छिन्नप्रान्तौ दर्भौ ॥ ७ ॥ तयोरध्युर्वश्यसीत्युदक्कूलां प्रत्यक्प्रजननामधरारणिम् ॥ ८ ॥ आयुरसीत्याज्यस्थाल्यामु[6]त्तरारणिमनक्ति संपादयति च ॥ ९ ॥ पुरूरवा असीत्यभिमन्त्र्य गायत्रमसीति पर्यायैस्त्रिरभिमथ्याग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति ॥ १० ॥ अग्नये जातायेति जाते ॥ ११ ॥ अग्नये प्रह्रियमाणायेति प्रहरिष्यन् ॥ १२ ॥ अग्रेणोत्तरं परिधिमुत्तरेण वा परिधिसंधिमान्ववहृत्य भवतं नः समनसावित्यनुप्रहृत्याग्ना अग्निरिति स्रुवेणाभिजुहोति ॥ १३ ॥ सावित्रेण रशनामादाय बाहुं पशोर्मेध्यपाशेन[8] परिहृत्य दक्षिणार्धशिरो[9] ऽक्ष्णया पाशेनाभिदधाति[10]—ऋतस्य त्वा देवहविरिति ॥ १४ ॥ धर्षा मानुषो इति यूपे नियुनक्ति ॥ १५ ॥ प्रोक्षणीः संस्कृत्य पशुं प्रोक्षति—अद्भ्यस्त्वौषधीभ्य इति ॥ १६ ॥ अनु त्वा माता मन्यतामित्यभिमन्त्र्यापां पेरुरसीति पाययति ॥ १७ ॥ स्वात्तं सद्धविरिति शेषेण सर्वत उपोक्ष्य संमृश्याज्यानि वेद्यन्तान्परिस्तीर्य होतृषदनानास्तीर्याग्नये[11] समिध्यमानायानुब्रूहीति संप्रेष्यति ॥ १८ ॥ स्रौचमाघार्य ध्रुवां समज्य पशुं समनक्ति—सं ते वायुरिति प्राणदेशं सं यजत्रैरङ्गानीति कुकुद्देशं सं यज्ञपतिराशिषेति भसद्देशम् ॥ १९ ॥ प्रयाजेषु समिद्भ्यः प्रेष्येति प्रथमे संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् ॥ २० ॥ चतुर्थे चतुर्थे समानयति ॥ २१ ॥ दशभिः प्रचर्य स्वरुं स्वधितिधारां च जुह्वामक्त्वा स्वरुणा स्वधितिमन्तर्धाय पशोरन्तराशृङ्गमनक्ति—घृतेनाक्तौ पशूंस्त्रायेथामिति ॥ २२ ॥ आयतने स्रुचौ सादयति ॥ २३ ॥ आहवनीयादुल्मुकमुपयस्य पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यति ॥ २४ ॥ शामित्रं

1 The ms second hand चिकित्वान॰.

2 The ms second hand सुकृतस्य

3 The ms second hand यजे हि. This and the preceding variants agree with Man I 8 3, 1.

4 MS I. 2 15,

5 MS I, 2, 7

6 The ms ॰स्थाल्या उ॰.

7 The alternative [illegible] based on KS XXVI, 7 131, 12

8 The ms first hand ॰मेंधापाशेन.

9 The ms second hand दक्षिणार्ध्यशिरो

10 The ms पाशेनापिद॰.

11 The ms adds देवेभ्य.

चात्वालँ पशुमाहवनीयँ यूपमाज्यानीत्याग्नीध्रश्चिः पर्यग्निं[1] कृत्वाहवनीय उल्मुकमवसृज्य त्रिः प्रतिपर्येति ॥ २५ ॥ ये बध्यमानमिति[2] पशुप्रमोचनीया जुहोति ॥ २६ ॥ रेवतीति पपाश्रपणीभ्यां पशुमन्वारभते यजमानश्च ॥ २७ ॥ तदेषोल्मुकमुप[3]र्यस्याग्नीध्रो ऽग्रतः प्रतिपद्येत ॥ २८ ॥ अन्वारभ्याश्रावयति ॥ २९ ॥ उल्मुकपाणिराग्नीध्रः प्रत्याश्रावयति—उपप्रेष्य होतर्हव्या देवेभ्यो इति संप्रेष्यति ॥ ३० ॥ उरो अन्तरिक्षेत्यग्निमुखास्तीर्थेनोदञ्चो व्रजन्ति ॥ ३१ ॥ शामित्रलक्षणे ऽग्निँ सादयति ॥ ३२ ॥ तस्मिन्पशुँ श्रपयति ॥ ३३ ॥ पश्चाच्छामित्रस्य याभ्यां वृभ्यां पशुमुपाकरोति तयोरन्यतरमधस्तादुपास्यति—समस्य तन्वा भवेति[4] ॥ ३४ ॥ वर्षीयो वर्षीयसे इति यजमानो जपति ॥ ३५ ॥

इति पशु [ षष्ठे ऽध्याये ] चतुर्थं खण्डम् ॥

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥

इति पर्यावृत्येहै[5] प्रजा विश्वरूपा रमन्तामिति[6] पृषदाज्यमवेक्षते यजमानश्च ॥ १ ॥ प्रत्यक्शिरसमुदीचीनपादँ संज्ञपयन्ति ॥ २ ॥ स्वर्विदसीति यजमानः संज्ञप्यमानमनुमन्त्रयते ॥ ३ ॥ न वा एतन्म्रियसे इत्यध्वर्युः ॥ ४ ॥

यत्पशुर्मायुमकृतोरो वा पड्भिरा[7]हते ।
अग्निर्मा[8] तस्मादेनसो विश्वान्मुञ्चत्वँहसः ॥

इति संज्ञप्ते जुहोति ॥ ५ ॥ शमितार उपेतनेति संप्रेष्यति ॥ ६ ॥ पश्चात्पशुमिति पाशेषु प्रमुच्यमानेषु जपति ॥ ७ ॥ एकस्पृक्त्या पाशाँश्चात्वाले ऽनुप्रहरति ॥ ८ ॥ यो नो द्वेष्यधरः स पद्यतामिति यद्यभिचरेत् ॥ ९ ॥ स्तम्बे[9] स्थाणुँ वापिदध्यात्—

शतेन पाशैर्वरुणाभिधेहि मा ते मोच्यनृतवाङ् नृचक्षः ।
आस्तां जाल्म उदरं[10] स्रंसयित्वा कोश इवाबन्ध[11] परिकृत्यमानः ॥

इति ॥ १० ॥ नमस्त आतानेति[12] पत्न्यादित्यमुपतिष्ठते ॥ ११ ॥ अनर्वा प्रेही-त्येनामभ्युदानयते ॥ १२ ॥ देवीरापो इत्यभ्यधि चात्वालं पत्न्यपो ऽवमर्शयति[13]

1 The ms first hand पर्यग्निं.

2 MS I 2, 15.

3 The ms •ल्मुक उप•.

4 MS IV 13, 4 203, 6.

5 The ms पर्यवृत्तेह.

6 MS IV. 2, 10 32, 14.

7 The ms पड्भिरा• first hand, पङ्क्तिरा• second hand.

8 The second hand अमिर्नस्.

9 The ms स्यर्वं first hand, स्तम्बं second hand.

10 The ms first hand जोम्ल्यमुदरं.

11 The ms first hand कोशेवाध.

12 MS I, 2, 16.

13 The ms ऽधमर्शयति first hand, ऽवमृशति second hand.

॥ १३ ॥ ताभ्यः[1] पत्नी पशोः प्राणान्प्रक्षालयत्यध्वर्युर्वा ॥ १४ ॥ अन्यतरो ऽभिषिञ्चेत् ॥ १५ ॥ वाचमस्य मा हिंसीरिति[2] यथारूपं गात्राणि संमृशति। यत्ते क्रूरं यदास्थितमिति[2] पूर्वेश्चानुपजेत् ॥ १६ ॥ गात्राण्यस्य मा हिंसीरिति[2] ग्रीवाः पृष्ठदेशं शमद्भ्य इति शेषेण सर्वतः ॥ १७ ॥ उत्तानं पर्यावृत्योपाकरणं[3] दर्भमन्तर्दधाति ॥ १८ ॥ ओषधे त्रायस्वैनमिति[2] दर्भमन्तर्दधाति ॥ १९ ॥ स्वधिते मैनं हिंसीरित्यैनक्तः[4] स्वधितिना तिर्यगाच्छ्यति ॥ २० ॥ उपयच्छति तृणाग्रम् ॥ २१ ॥ लोहितात्कं प्रत्यग्दक्षिणा निरस्यति—पृथिव्यै त्वा रक्षसां भागो ऽसीति[2] ॥ २२ ॥ इदमहं रक्षो ऽवबाध इदमहं रक्षो ऽधमं तमो नयामीति[2] पाष्ण्या तृणमपबाधते ॥ २३ ॥ अपः स्पृष्ट्वेषे त्वेति[2] वपामुत्खिदति ॥ २४ ॥ ऊर्जे त्वेति[2] तनिष्ठ एकश्छ्रायोपतृणत्ति[5] ॥ २५ ॥ देवेभ्यः शुन्धस्वेति[2] वपां प्रक्षालयति ॥ २६ ॥ देवेभ्य शुम्भस्वेति[2] लोहितं प्रत्यूहति ॥ २७ ॥ घृतेन द्यावापृथिवी[2] इति द्विश्छ्रकां प्रच्छायोत्कृत्य[6] नम सूर्यस्य संदृशे[2] इत्यादित्यमुपस्थायोर्वन्तरिक्षं वीहीति[2] प्रजाति ॥ २८ ॥ प्रत्युष्टं रक्ष इति शामित्रे वपां प्रत्योषति[7] ॥ २९ ॥

इति पशुषु [ षष्ठे ऽध्याये ] पञ्चमं खण्डम् ॥

त्वामु ते दधिरे देवयन्तो हव्यवाहं भृतं कर्तारमुत यज्ञियं च।
अभि व्रज्य सुमनुई भूत्वा देवेभ्यो हव्या वह जातवेद ॥

इति स्रुवेणाभिघार्यं स्तोकेभ्यो ऽनुब्रूहीति संप्रेष्यति ॥ १ ॥ श्येनी[8] भृतां बर्हिष्यासादयति—सुपिप्पला ओषधीस्कृधीति[8] ॥ २ ॥ वपाश्रपण्यौ विप्रमुच्योत्तमेन प्रयाजेन प्रचरति ॥ ३ ॥ स्वाहाकृतिभ्य. प्रेष्येति संप्रेष्यति ॥ ४ ॥ हुत्वा ध्रुवां पृषदाज्यं वपामित्यभिघारयति ॥ ५ ॥ यथाकाम्याज्यभागयोर्होमः[9] ॥ ६ ॥ सर्वहुतं वपां जुहोति ॥ ७ ॥ अभितो वपां हिरण्यशकलावचति ॥ ८ ॥ स्वाहा देवेभ्य[10] इति पुरस्ताद्वपायाः स्रुवेण जुहोति विश्वेभ्यो देवेभ्यः स्वाहेत्युपरिष्टात् ॥ ९ ॥ इन्द्राग्निभ्यां छागस्य वपाया मेदसो ऽनुब्रूहि[11]। इन्द्राग्निभ्या छागस्य वपाया मेदस प्रेष्येति संप्रेष्यति ॥ १० ॥

जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूव।

1 We would expect ताभिः.

2 MS I 2 16.

3 To be emended to पर्यावर्त्योपा॰ ?

4 "With the unanointed side (of the svadhiti)" ?

5 The ms first hand तनिष्टत्येकश्छंगयेति पद.

6 The ms ॰क्कृत first hand, ॰कृतं second hand.

7 ? The ms प्रत्युषति first hand, निष्टपति second hand.

8 MS I. 2, 2- 11 7

9 The ms ॰होमे.

10 MS III. 10. 1. : 130, 17.

11 The ms second hand adds इति.

घृतेनाग्ने तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः[1] ॥

इति वपां हुत्वा स्वाहोर्ध्वनभसमिति[2] व्यत्यस्ते वपाश्रपण्यावनुप्रहरति प्राचीमेकशूलां प्रतीचीं द्विशूलाम् ॥ ११ ॥ संपातेनाभिहुत्यायतने स्रुचौ सादयति ॥ १२ ॥ चात्वाले[3] आपोहिष्ठीयेन त्र्यृचेन मार्जयन्ते सहयजमानपत्नीकाः[4] ॥ १३ ॥ अत्रैव मधुमन्थानां कालः ॥ १४ ॥ मुष्टिना शमिता वपोद्धरणमभिधायास्त आ वपाया होमात् ॥ १५ ॥ उखायां पशुं श्रपयति शूले हृदयम् ॥ १६ ॥ न गुदं निर्लेपयेन्न वनिष्ठुम् ॥ १७ ॥ मेदो मूल उपनह्यति ॥ १८ ॥ ऊवध्यगोहं खात्वावध्यं गूहति[5] ॥ १९ ॥ व्रीहीणां पशुना समानदेवतं पशुपुरोडाशं श्रपयति ॥ २० ॥ [ अन्तेन ] पशौ पशुपुरोडाशेन प्रचरति ॥ २१ ॥ इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि[6] । इन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति संप्रेष्यति ॥ २२ ॥ अग्नये ऽनुब्रूहीति । अग्नये प्रेष्येति स्विष्टकृते ॥ २३ ॥ इडान्तं कृत्वा पृषदाज्यस्य स्रुवेणोपहत्य परैति[7] ॥ २४ ॥ शृतं हविः शमितः[8] इति पृच्छति ॥ २५ ॥ शृतमिति[9] शमिता प्रत्याह ॥ २६ ॥ समयाध्वे द्वितीयम् । आप्य तृतीयम् ॥ २७ ॥ उत्तरतो ऽवस्थायै हृदयमवधाय जुष्टं देवेभ्यः[11] इत्यभिघार्य पिवाजिनं कृत्वान्तरा यूपाहवनीयावतिहृत्य दक्षिणतः प्लक्षहोमेपसादयति ॥ २८ ॥ जुहूपभृतोर्वसाहोमहवन्यां समवत्तधान्यामित्युपस्तीर्य प्लक्षशाखायां हृदयमवधायाकयाय[ध]स्मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति संप्रेष्यति ॥ २९ ॥

इति पशुषु [ षष्ठे ऽध्याये ] षष्ठ खण्डम् ॥

हृदयस्य जिह्वायाः क्रोडस्य सव्यस्यै कपिललाटस्य पार्श्वयोर्यक्नो वृक्कयोर्दक्षिणस्याः श्रोण्याः[13] गुदतृतीयमिति द्विर्द्विरवदाय जुह्वामवधाति ॥ १ ॥ त्रिधा गुदं विच्छिद्यास्थाणीयसो देवताभ्यो ऽवद्यति ॥ २ ॥ स्थविष्ठगुदस्योपयड्भ्यो निदधाति ॥ ३ ॥ दक्षिणस्य कपिललाटस्य पूर्वार्धान्मध्यमं गुदतृतीयं सव्यायाः श्रोण्या जघनार्धात्सकृत्सकृदुपभृति स्विष्टकृते ॥ ४ ॥ यूपे मेदः परिस्राव्य त्रैधं

1 The ms second hand घृतस्याग्ने तन्वा सम्भव
2 MS III 10 1 131 2
3 The ms चात्वालम्.
4 The ms second hand •पत्नी.
5 ! The ms ऊवध्यगोह खात्वोवध्य गुपति first hand, ऊवध्यं गर्ते प्रविध्यति । अव-दानानि श्रपयति second hand
6 The ms second hand adds इति.
7 Derived from MS III 10 2 132 3
8 MS ib 4.
9 Ib 6
10 The ms second hand •ध्याप्य, but cp Mān 1. 8. 5. 13.
11 MS I 2. 27. 17. 3
12 The ms मध्यस्य.
13 The ms second hand श्रोणे.

विच्छिद्य जुहूपभृतौ प्रच्छादयति ॥ ५ ॥ शेषमिडायामभितो दैवतानि हिरण्यशकलाववधाति ॥ ६ ॥ रेडसीति[1] स्वधितिना वसाहोमं प्रयौति ॥ ७ ॥ प्रयुता द्वेषाँसी-ति पार्श्वेनापस्त्वा समरिएवधितिति[2] गृहीत्वा पार्श्वेनापिदधाति ॥ ८ ॥ अनुसुँ पडिडाँ[3]मवधति वनिष्ठुँ सप्तमम् ॥ ९ ॥ क्रोमानं[4] पुरीततमिति संकृत्यं[5] वर्धयित्वेडां यूपेणोपसिच्य प्रतिपरीत्य प्रचरति ॥ १० ॥ इन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहि । इन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति संप्रेष्यति ॥ ११ ॥ घृतं घृतपावानं इत्यर्धर्चे याज्यायां[6] वसाहोमं जुहोति ॥ १२ ॥ पृषदाज्येन सकृदेव तेन वनस्पतिं[7] यजति ॥ १३ ॥ वनस्पतये ऽनुब्रूहि । वनस्पतये प्रेष्येति संप्रेष्यति ॥ १४ ॥ वसामशेषेणं दिशः प्रति यजति—दिशः स्वाहेति[1] पर्यायैः प्रतिदिशम् ॥ १५ ॥ मध्ये पञ्चमेन पूर्वार्धं[8] पञ्चेन ॥ १६ ॥ औपभृतं जुह्वामवनीय स्विष्टकृता प्रचरति ॥ १७ ॥ ऐन्द्रः प्राणो इति यजमानः पशुँ संमृश्यत्यवदानवन्तम्[9] ॥ १८ ॥ उपहूतायामिडायामभ्यूध्नी[10] होत्रे हरन्ति ॥ १९ ॥ वनिष्टुमग्नीध आदधाति यथाग्नीध्रभागम्[11] ॥ २० ॥ दक्षिणासम्मार्जनसंप्रेषमुक्त्वाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीदस्वेति संप्रेष्यति ॥ २१ ॥ शामित्रादाग्नीध्रो ऽङ्गारान्पश्चार्धे वेद्या व्यूह्योपसमादधाति ॥ २२ ॥ उत्तरतो दक्षिणामुख उपविश्य तस्मिन्प्रतिप्रस्थातोपयजति गुदकाण्डमेकादशधा संभिन्द्यावदाय वषट्कारान्तेष्वनुयाजानामेकैकं हस्तेन जुहोति ॥ २३ ॥ समुद्रं गच्छ स्वाहेति[12] पर्यायैरेकादश हुत्वा मनो हार्दि[13] यच्छेति[12] हृदयदेशमभिमृशति ॥ २४ ॥ ओषधीभ्यस्त्वेति[12] दर्भेषु निमार्ष्टि ॥ २५ ॥ अपः स्पृष्ट्वा पृषदाज्येनानुयाजान्यजति ॥ २६ ॥ देवेभ्यः प्रेष्येति प्रथमे संप्रेष्यति प्रेष्येत्युत्तरान् ॥ २७ ॥ एकादशभिः प्रचर्य स्वरुं जुह्वां त्रिरुपरिष्टात्त्रिरधस्तादक्त्वा दधाति—दिवं ते धूमो गच्छत्विति[14] ॥ २८ ॥ ऊर्ध्वं[13] स्वरुहोमात्प्रागनुदेशाद्यूपो नोपस्पृश्यः[14] ॥ २९ ॥ सूक्तवाके सूक्ता प्रेष्येति संप्रेष्यति ॥ ३० ॥ आग्नेय्या पत्नीः सँयाजयत्युत्तमाया देवानां पत्नीभ्यो ऽवद्यतीडां चाग्नये गृहपतये चाग्नीधे च ॥ ३१ ॥ यज्ञं गच्छ स्वाहेति[15] पर्यायैस्त्रीणि

1 MS I, 2. 17.
2 MS I, 2, 16. 27, 1.
3 ! The ms अनुसुँदिडा॰ first hand, वनिष्ठुँ पडिडा॰ second hand.
4 Perhaps ह्रीहान has fallen out, Cp Āp VII 24 12.
5 ! The ms second hand संस्कृत्य.
6 The ms याज्यया.
7 Perhaps to be emended to वसाशेषेण. Cp Man I, 8 5 29
8 The ms पूर्वार्धे–.
9 The ms अवतानवंत.
10 From MS III. 10. 4. 135, 1.
11 The ms यथा अग्नीध्रभाग first hand, यथाग्नींध्रभाग second hand.
12 MS I, 2, 18.
13 The ms त्रिः पुरस्तात्.
14 MS I, 2. 14: 24, 6.
15 Based on MS III 9, 4. 120. 6.

समिष्टयजूंषि जुहोति ॥ ३२ ॥ पुरस्तान्नित्यस्य तृतीयः स्वाहाकारः पूर्णपात्र स्थाने[1] ॥ ३३ ॥ शूलेनावभृथं यन्ति ॥ ३४ ॥ पैरोगोष्ठं यदार्द्रमनुदकमनौषधिक च तस्मिन्शामितोपवपति ॥ ३५ ॥ शुगसि यं द्विष्मस्तमभिशोचेत्युपोप्यमानमनुमन्त्र यते ॥ ३६ ॥ धाम्नो धाम्नो राजन्नित्यन्तादनुवाकस्याप्याधि [चात्वालं] मार्जयित्वा समिधः कृत्वानपेक्षमाणाः प्रत्यायन्ति—एधो ऽस्येधिषीमहि स्वाहेत्याहवनीये समिधमादधाति ॥ ३७ ॥ समिदसि समेधिषीमहीति द्वितीयाम् ॥ ३८ ॥

इति षष्ठो ऽध्यायः ॥

---

1 There is nothing in the kindred texts to explain this sūtra

3 The ms शु°.

3 MS III 10, 7. 139 11 has अनूद्कं.

4 MS I. 2. 18.

5 The ms माश्रयित्वा.

6 MS I 3 39 46 11

7 The remaining part of the Pasubandha is missing

तरसत्यं तच्छकेयं तेन शकेयं तेन राध्यासमिति यजमानो जपति ॥ चतुरो मासान्न मांसमश्नीयान्न स्त्रियमुपैति नोपर्यास्ते जुगुप्सेतानृतात्प्राङ् शेते ॥ मध्यमास्तृतौ भार्यामुपैति ॥ सर्वेष्वन्तरालव्रतानि वैश्वदेवोत्तराणि सह-पञ्चसंचराणि ॥ पर्वाणि व्याख्यातानि ॥ विकारान्व्याख्यास्यामः ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] प्रथम खण्डम् ॥

चतुर्षु मासेषु वरुणप्रघासाः ॥ १ ॥ प्रतिप्रस्थतामिक्षायै मारुत्यै वत्सान-पाकरोत्यध्वर्युर्वारुण्यै ॥ २ ॥ प्रतिप्रस्थातुः पयसि ॥ ३ ॥ पूर्वकर्मोऽध्वर्योरारात् ॥ ४ ॥ पूर्वेद्युरग्निप्रणयनम् ॥ ५ ॥ वेदी कुरुत उत्तरामध्वर्युर्दक्षिणां प्रतिप्रस्थाता ॥ ६ ॥ असंभिन्ने समे[7] ॥ ७ ॥ पृथमात्रमन्तरा ॥ ८ ॥ उत्तरस्यामुत्तरवेदिसंभारा-न्न्युप्याहवनीयादग्नी प्रणयतः ॥ ९ ॥ अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति ॥ १० ॥ अग्रेणोत्तरां वेदिं प्रतिप्रस्थातान्तरा वेदी प्रतिप्रस्थाता ॥ ११ ॥ पात्राणि प्रयुनक्ति ॥ १२ ॥ अविनिर्देशे समानमुभयोः कर्म ॥ १३ ॥ यथा वैश्वदेवे हवींष्यो-षधपात्राणि ॥ १४ ॥ आमन्त्रणादि प्राणीताः संप्रैषान्मारुतीवर्जं निर्मन्थ्यं प्रच-रतिमिडामित्यध्वर्युरेव पत्नीसंयाजप्रभृति[8] ॥ १५ ॥ समानो होता ब्रह्माग्नीध्र उत्करः ॥ १६ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्या-मिक्षा काय एककपालो वाजिनमिति हवींषि ॥ १७ ॥ निरुप्तेषु प्रतिप्रस्थाता

1 The beginning of the Cāturmāsya is lost in the lacuna.

2 The ms सर्वेष्य॰.

3 The ms संचा॰.

4 The ms पूर्वेद्युरग्निप्र॰.

5 See MS I 10, 13 153, 4-5

6 The ms ॰वेदि.

7 The sūtra is corrupt. Cp Āp VIII, 5, 24, Hir V, 4 460.

8 The sūtra is corrupt

तूष्णीको यवान्युप्यामपेषाणां[1] करम्भपात्राणि करोति प्रतिपुरुषँ यजमानस्यैकं चाङ्गुष्ठपर्वमात्राण्येकोर्द्धानि ॥ १८ ॥ शमीपर्णैः पूरयित्वा शेषस्य मेषं च मेषीं च कुरुतः[2] ॥ १९ ॥ लिक्ताभिरूर्णाभिरावेष्ट्य परःशतानि शमीपर्णानि घासं निवपतः ॥ २० ॥ उत्तरैः परिग्राहैः परिगृह्य दक्षिणस्या वेद्या उत्तरस्याः श्रोण्या अभ्युत्तरस्या आ दक्षिणार्द्धँसात्स्फ्येन वेदीं संभिनत्ति ॥ २१ ॥ पृषदाज्ये गृह्णीतः मरुदुपस्तीर्य द्विर्दधि द्विरभिघारयेत् ॥ २२ ॥ उद्वासनवेलायामामिक्षयोः सर्जूरसक्तूनावपतः ॥ २३ ॥ मारुत्यां प्रतिप्रस्थाता मेषमवदधाति वारुण्यामध्वर्युर्मेषीम् ॥ २४ ॥ आसादयन्तौ विपरिहरतः ॥ २५ ॥ वारुणीनिष्कापं निदधाति ॥ २६ ॥ उत्तरस्मिन्नग्नौ संसृष्टे ऽसंसृष्टे दक्षिणस्मिन्प्रतिप्रस्थाता पत्नीं पृच्छति कतिभिर्मिथुनमचर इति[3] ॥ २७ ॥ सत्यं विवाचयिषेत् ॥ २८ ॥ यानिर्दिशेत्तान्वरुणो गृह्णात्विति ब्रूयात् ॥ २९ ॥ प्रघास्यान्हवामहे इति करम्भपात्राण्यादाय यजमानः पत्नी चापरेण विहारमनुपरिक्रम्य पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ शिरस्याधाय दक्षिणस्मिन्नग्नौ शूर्पेण जुहुतः ॥ ३० ॥ मो षू ण इति यजमानः पुरोऽनुवाक्यां जपति ॥ ३१ ॥ यद् ग्रामे इत्युभौ याज्यां निगद्य जुहुतः ॥ ३२ ॥ अक्रन्कर्मेति[4] अपुरक्रामन्ताववभृथमन्त्र· येते ॥ ३३ ॥ अध्वर्युर्वा जुहुयादन्वारभेयातामेतौ ॥ ३४ ॥ आज्यभागाभ्यां प्रचर्य स्रुक्पाणिः प्रतिप्रस्थाताकाङ्क्षति यावदध्वर्युरैन्द्राग्नपष्ठैः प्रचरति ॥ ३५ ॥ मारुत्योः[5] प्रतिप्रस्थाता पूर्वेणावदानेन सह मेषीमवद्यति वारुण्या अध्वर्युरुत्तरेण सह मेषम् ॥ ३६ ॥ इडावत्सरीयाँ स्वस्तिमाशास इति यजमानो जपति ॥ ३७ ॥ मिथुनौ गावौ दक्षिणा ॥ ३८ ॥ समवनीय वाजिनं भक्षयत्युपास्ते प्रतिप्रस्थाता ॥ ३९ ॥ पत्नीसँयाजान्समिष्टयजुरध्वर्युर्जुहोति यथा पशुबन्धे ॥ ४० ॥ तूष्णीं प्रतिप्रस्थाता स्रुवं विहारयति ॥ ४१ ॥ वारुणीनिष्कापेण[6] तुषैश्चावभृथँ यन्ति यथा सोमे साम ऋजीषप्रहरणँ स्नानमिति परिहाप्य ॥ ४२ ॥ निवर्तयते—

यद् धर्म पर्यावर्तयदन्तान्पृथिव्या अधि ।
अमित्तिग्मेनेति[7] समानम् ॥ ४३ ॥

इति चातुर्मास्ये ( सप्तमे ऽध्याये ) द्वितीय खण्डम् ॥

चतुर्षु मासेषु साकमेधाः ॥ १ ॥ पूर्वां पौर्णमासीमानीकवतायोपवसेदु-

1 The ms ॰येवाना first hand, पेषाणा यवना second hand
2 The ms कुरुते.
3 The ms ॰मचरादिति
4 MS I 10 2
5 The ms मारुत्य first hand, मारुत्या second hand
6 The ms निस्कारेण first hand, निस्कासेण second hand.
7 MS II 10 2 132 16

त्तरां कौडिनीयार्ये ॥ २ ॥ अग्नयेऽनीकवते प्रातरष्टाकपालो मरुद्भ्यः सांतपनेभ्यो मध्यन्दिने चरुर्मरुद्भ्यो गृहमेधेभ्यः सर्वासां दुग्धे सायमोदन इन्द्रस्य निष्कापः ॥ ३ ॥ यजुषा वत्सानपाकरोति ॥ ४ ॥ अपवित्रे दोहयति ॥ ५ ॥ नेध्माबर्हिः संनह्यति ॥ ६ ॥ नोपभृत्याज्यं गृह्णाति ॥ ७ ॥ ओदनस्य शरोनिष्कापं निदधाति ॥ ८ ॥ धीनोदनानुद्धृत्योत्पूतान्करोति ॥ ९ ॥ न सामिधेनीरन्वाह ॥ १० ॥ न प्रयाजान्यजति ॥ ११ ॥ आज्यभागाभ्यां प्रचर्यौदनानाँ सकृत्सकृत्समवदाय प्रचरति ॥ १२ ॥ इडान्ता भवति ॥ १३ ॥ अमात्येभ्य ओदनानुपहरन्ति ॥ १४ ॥ प्रतिवेशमोदनं पचति ॥ १५ ॥ तस्य पत्न्यश्नाति ॥ १६ ॥ आज्याभ्यज्य सुहिता वसन्ति ॥ १७ ॥ ओदनान्प्रतिवेशा पचन्ते गावश्च प्रते ॥ १८ ॥ सवत्सा गावो वसन्ति ॥ १९ ॥ प्राचीनरात्रे ऽभिवान्याया अग्निहोत्र्याश्च वत्सौ बध्नन्ति ॥ २० ॥ पुरा प्रातरग्निहोत्राद्गार्हपत्ये शरोनिष्कापपूर्णी दर्वी [ पूर्णां दर्वे ] परापतेर्यूपममाहवते ॥ २१ ॥ यदृषभो न रुयाद् ब्रह्मा ब्रूयाज्जुहुधीति ॥ २२ ॥ मरुद्भ्यः क्रीडिभ्यः साकँ रश्मिभिः सप्तकपालं निर्वपेत्प्रचरेद्वा ॥ २३ ॥ महाहविषा यजते सोत्तरवेदिमग्निं प्रणीय ॥ २४ ॥ पञ्च संचराण्यैन्द्राग्नो द्वादशकपाल इन्द्राय वृत्रघ्ने चरुर्वैश्वकर्मण एककपाल इति हवीँषि ॥ २५ ॥ पुरस्तात्स्विष्टकृतो ऽग्ने वेहोत्रमित्यभिघारयति ॥ २६ ॥ ऋषभो दक्षिणा ॥ २७ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] तृतीयं खण्डम् ॥

पितृयज्ञे ऽग्रेण दक्षिणा[ग्निँ] वेदिमुद्धरति ॥ १ ॥ अखाता भवति ॥ २ ॥ प्रागुदीचीनँ स्तम्बयजुर्हरति ॥ ३ ॥ समं चतुरश्रं परिश्रयति ॥ ४ ॥ उत्तरां प्रति वेश्रिश्रोर्णि द्वारं कुर्वन्ति ॥ ५ ॥ पकोल्मुकं मध्ये वेद्याः सादयति ॥ ६ ॥ स आहवनीयः ॥ ७ ॥ वर्षीयो नित्याद्बर्हिरुपमूललूनँ वर्षीयानिध्मः ॥ ८ ॥ अग्रेण नित्यमाहवनीयमतिहारः ॥ ९ ॥ उत्तरतो वेद्याः पात्राणि प्रयुनक्ति ॥ १० ॥ दक्षिणतो निर्वपति ॥ ११ ॥ सोमाय पितृमते षट्कपालः पुरोडाशः पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्यो ऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥ तू[ष्णीं]काँस्त्र्यम्बकान्पुरोडाशानेककपालान्प्रतिपुरुषँ यजमानस्यैकाधिकान् ॥ १३ ॥ प्रोक्षणीस्तिष्ठान्यैवानय-

1 The ms first hand कैडिनीयाग्नये. The second hand makes worthless changes

2 The ms •मोदनं, but cp MS I. 10 1. 140. 13-15.

3 The ms •त्योत्पुगालं first hand, •त्योत्स्कालं second hand.

4 Derived from MS I. 10. 15. 155. 3.

5 Ib I.

6 The ms second hand परा•.

7 The ms second hand बध्नाति.

8 MS I 10. 2: 142. 6.

9 See MS I. 10. 1. 141. 1-3.

10 MS I. 10. 2. 141. 7.

11 The ms •णीं. स्तिमान् first hand, प्रोचरयुदैकेण second hand.

घ्नन्ति ॥ १४ ॥ दक्षिणार्धे गार्हपत्यस्य पुरोडाशँ श्रपयत्युत्तरार्धे त्र्यम्बकान् ॥ १५ ॥ दक्षिणाग्नौ यवान्भृज्जति[1] ॥ १६ ॥ पेषणवेलायां धाना मन्त्रेण विभजति ॥ १७ ॥ अभिवान्यायाः पयसि[2] मन्थं दोहन इक्षुशलाकया प्रसव्यमालोडयति ॥ १८ ॥ शलाकास्थं मन्थं करोति[3] ॥ १९ ॥ चतुर्गृहीतान्याज्यान्यध्यधि गार्हपत्यं गृह्णाति ॥ २० ॥ तूष्णीं प्रस्तरमुद्धवमादत्ते ॥ २१ ॥ समन्तं वर्हिर्भिः स्तृणन्पर्येत्येया विष्ठेति[4] ॥ २२ ॥ त्रिरस्तृणन्प्रतिपर्येति ॥ २३ ॥ एकैकमभ्युदाहरत्युदकुम्भमाज्येनाग्रतः परिषेचनाय ॥ २४ ॥ अग्नये देवेभ्य. पितृभ्य समिध्यमानायानुब्रूहीति संप्रेष्यति ॥ २५ ॥ उशन्तस्त्वा हवामह इत्येका सामिधेनी ॥ २६ ॥ तस्यां त्रिरुक्तायाँ सकृत्त्रिध्ममादधाति ॥ २७ ॥ न होतारँ वृणीते नार्षेयम् ॥ २८ ॥ अपबर्हिषः प्रयाजान्यजति ॥ २९ ॥ आज्यभागाभ्यां प्रचर्य प्राचीनावीतानि कुर्वते ॥ ३० ॥ विपरिहरन्ति हवीँषि ॥ ३१ ॥ विपरियन्त्यृत्विजः ॥ ३२ ॥ यथास्थानं जुहूः ॥ ३३ ॥ उपभृद्ध्रुवे दक्षिणे ॥ ३४ ॥ यथास्थानं पुरोडाशं दक्षिणं धाना मन्थं दक्षिणतः ॥ ३५ ॥ आग्नीध्रः प्रत्याश्रावयति ॥ ३६ ॥ अपरं यजमानः ॥ ३७ ॥ दक्षिणतोऽध्वर्युरवद्यति[5] त्रिश्चतुरवदानस्य चतुः पञ्चावदानस्य ॥ ३८ ॥ उद्ङ्गतिकामँ[6] सोमाय पितृमतेऽनु स्वधेत्यनुवाचयति ॥ ३९ ॥ ओं[7] स्वधेत्याश्रावयति ॥ ४० ॥ अस्तु स्वधेति प्रत्याश्रावयति ॥ ४१ ॥ सोमं पितृमन्तँ स्वधेति संप्रेष्यति ॥ ४२ ॥ स्वधा नम इति वषट्कारः[8] ॥ ४३ ॥ दक्षिणामुखो[9] दक्षिणार्धे जुहोति ॥ ४४ ॥ एतेन धर्मेण स्विष्टकृदन्तैः प्रचरति ॥ ४५ ॥ अग्निः कव्यवाहन इति स्विष्टकृत् ॥ ४६ ॥ मन्थादीनामिडामवद्यति ॥ ४७ ॥ ब्रह्माग्नीध्रो यजमान इत्यवघ्रेण भक्षयित्वेडाँ हविःशेषाँश्च त्रीन्पिण्डान्कृत्वा स्रक्तिषु प्रसव्यं निदधाति यथा पिण्डपितृयज्ञ उत्तराँ श्रोणीं परिहाप्य ॥ ४८ ॥ तस्यां लेपान्निमार्ष्टि ॥ ४९ ॥ अत्र पितरो मादयध्वमित्युक्त्वा परेत्य सुसंदृशं त्वा वयमित्याहवनीयमुपतिष्ठन्ते ॥ ५० ॥ योजा न्विन्द्र ते हरोमिति[10] प्रणवेन ताम्यन्ते ॥ ५१ ॥ यदन्तरिक्षमिति[11] गार्हपत्यम् ॥ ५२ ॥ अमीमदन्त पितरँ इति परिश्रितं प्रपद्याञ्जनाभ्यञ्जनदशानिह्नवनामिति कृत्वा परेतन पितरँ इति त्रिरपः परिषिञ्चन्पर्येति ॥ ५३ ॥ अया विष्ठेति[12] त्रिरपारिषिञ्चन्प्रतिपर्येति ॥ ५४ ॥

1 The ms भृंजति.
2 The ms अभिनवान्यायपयति.
3 1 The ms मंथं शलाका कुर्वती.
4 Based on MS I, 10 17 157. 12.
5 MS I. 10, 3.
6 The ms दक्षिणं.
7 Based on MS I. 10. 18. 158 6.
8 The ms second hand ओं.
9 From MS ib 15
10 The ms repeats the word.
11 MS I, 10 3 142 12
हरोम्=हरी+ओम्.
12 The ms त्रिरपः परिषिंचन्.

अक्षन्नमीमदन्तेति[1] पत्न्याग्निं[2] मनस्वतीश्च प्रत्यायन्ति ॥ ५५ ॥ अग्ने व्रतपाश्चमिति[3] गार्हपत्यमुपतिष्ठते ॥ ५६ ॥ अपबर्हिषावनुयाजौ यजति देवौ यज यजेति संप्रेष्यति ॥ ५७ ॥ न पत्नीः सँयाजयन्ति न समिष्टयजुर्जुहोति ॥ ५८ ॥ समाप्येष्टिं प्रागुदञ्चस्त्र्यम्बकैर्यजन्ति ॥ ५९ ॥ मूते पुरोडाशानुपवपन्ति ॥ ६० ॥ एकोल्मुकं पराचीनं धूपायमानँ हरन्ति ॥ ६१ ॥ आखुं ते रुद्र पशुं करोमीत्याखुकिरौ[4] पुरोडाशमेकमुपवपति ॥ ६२ ॥ एकोल्मुकं चतुष्पथ उपसमाधाय पुरोडाशानाँ सकृत्सकृत्समवदायारत्येन पलाशपर्णेन मध्यमेन जुहोति— एष ते रुद्र भाग इति ॥ ६३ ॥ अवाम्ब रुद्रमदिमहीति[5] यजमानो ऽमात्यैः सहाग्निं पर्येति ॥ ६४ ॥ पतिकामापि यायात् ॥ ६५ ॥ भगो ऽसि भगस्येषे[6] इत्युदस्य प्रतिलभ्य यजमानाय समावपन्ति ॥ ६६ ॥ पतिकामापि वा ॥ ६७ ॥ त्रिरेतेन धर्मेण ॥ ६८ ॥ यथास्वमुपयामम् ॥ ६९ ॥ भेषजं गवे इति द्वितीयं परियन्ति ॥ ७० ॥ त्र्यम्बकं यजामहे इति तृतीयम् ॥ ७१ ॥

सुगन्धिं पतिवेदनम्[7] ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

इति पतिकामा ॥ ७२ ॥ यथास्नातमितरे ॥ ७३ ॥ मूत[8] उपनह्य वृक्ष आसजति—एष ते रुद्र भाग इत्युभयतः ॥ ७४ ॥ अनपेक्षमाणाः प्रत्यायन्ति ॥ ७५ ॥ मार्जनं समिदाधानमिति यथा पशुबन्धे ॥ ७६ ॥ आप्यादित्यं घृते चरुं निर्वपति ॥ ७७ ॥ कैडिनिप्रभृत्यादित्यान्तं[9] प्रागस्तमयात्क्रियेत ॥ ७८ ॥ सँस्थितायां पौर्णमासी[10] सँस्थाप्य निवर्तयते—

यो ऽस्याः पृथिव्या अधि त्वचि निवर्तयत्योषधीः ।
अभिस्त्वमेनेति[11] समानम् ॥ ७९ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] चतुर्थं खण्डम् ॥

चतुर्षु मासेषु शुनासीर्यं[12] सद्यश्चतुरहे मासे वा ॥ १ ॥ पञ्च संचराणि वायव्या यवागूः प्रतिधुग्वेन्द्राय शुनासीराय द्वादशकपालः सौर्य एककपाल इति हवीँषि[11] ॥ २ ॥ सीरं द्वादशयोगं दक्षिणोष्टारो धानस्थाने ऽड्योगँ सीरमु-

1 MS I. 10. 3.
2 ! The ms second hand प्रत्याग्निं
3 MS I. 10. 4
4 The ms °खुकरै first hand, °खुत्करै second hand. Cp MS I. 10. 20: 160. 3
5 ! Perhaps to be emended to भगस्येशा (=भगस्येशे).
6 ! The ms second hand पतिकामा यायात्.
7 The Samhitā पुष्टिवर्धनम्.
8 The ms मूतमुप°.
9 The ms °दित्यार्जं
10 MS II. 10. 2 132. 16.
11 See MS I. 10. 1: 141. 4-5.
12 Identical with MS . 6. 2. 64 16.

द्वारौ वानड्वाहौ ॥ ३ ॥ निवर्तयते—

> यत्र मासा अर्धमासा ऋतवः परिवत्सराः ।
> येन तेन प्रजापतय ईजान संनिवर्तयन् ।
> तेनाहमस्मि ब्रह्मणा निवर्तयामि जीवसे[1] ॥

इति । अग्निस्तिग्मेनेति[2] समानम् ॥ ४ ॥ वैश्वदेवेनैव यजेत पशुकामः सहस्रं पशून्प्राप्योत्तरैः[3] ॥ ५ ॥ शुनासीर्येण ग्रामकामो ऽन्नाद्यकामो वृष्टिकामः पशुकामः स्वर्गकामो वा ॥ ६ ॥ उदकमन्ववसाय तस्योदकार्थान्कुर्वीत ॥ ७ ॥ सांवत्सरीकाणि ॥ ८ ॥ अत्र पञ्च संवत्सराण्येतेन धर्मेण फाल्गुन्यारम्भणान्फाल्गुनीसमापनांस्त्रीन्संवत्सरानिष्ट्वा वैश्यारम्भणौ चैत्रीसमापनौ द्वौ यजेत ॥ ९ ॥ अथ पशुमन्ति ॥ १० ॥ वैश्वदेवे सन्नेषु हविःषु यूपाय वैश्वदेवं पशुमुपाकरोति ॥ ११ ॥ यथाकालमविप्रतिषिद्धान् ॥ १२ ॥ पशुना चातुर्मास्यकान्धर्मान्करोति ॥ १३ ॥ समानं पशुकर्मोत्तमेनप्रयाजात् ॥ १४ ॥ उत्तमेन प्रयाजेन प्रचरति ॥ १५ ॥ ध्रुवादीनि हवींषि व्यभिघारयति ॥ १६ ॥ सहामिक्षावपामभिघारयति ॥ १७ ॥ आज्यभागाभ्यां प्रचर्य हविर्भिः प्रचरति ॥ १८ ॥ सहामिक्षावपेन प्रचरति ॥ १९ ॥ वपायाः संप्रैषाः ॥ २० ॥ पुरस्तात्स्विष्टकृतः पशुपुरोडाशेन प्रचरति ॥ २१ ॥ सहस्विष्टकृत्प्रैषयम्सहेडा ॥ २२ ॥ समानमान्तात्पशुकर्म ॥ २३ ॥ एतेनोत्तराणि सहपशुसंचराणि पर्वाणि व्याख्यातानि ॥ २४ ॥ विकारान्व्याख्यास्यामः ॥ २५ ॥ वरुणप्रघासेषूभयत्र यूपौ ॥ २६ ॥ मारुतं प्रतिप्रस्थाता पशुमुपाकरोति वारुणमध्वर्युः ॥ २७ ॥ प्रतिप्रस्थातुः पशौ पूर्वे कर्माध्वर्योरारात् ॥ २८ ॥ प्रतिप्रस्थातामिक्षावपेन पूर्वं प्रचरति ॥ २९ ॥ समानमुभयोः कर्म ॥ ३० ॥ एका मनोता ॥ ३१ ॥ प्रतिप्रस्थाता पशुना पूर्वं प्रचरति ॥ ३२ ॥ पशुयजमध्वर्योः संप्रैषाः ॥ ३३ ॥ समानेडा ॥ ३४ ॥ साकमेधेष्विन्द्राय वृत्रघ्ने पशुः ॥ ३५ ॥ वायवे नियुत्वते शुनासीर्ये ॥ ३६ ॥ समानमन्यत्समानमन्यत् ॥ ३७ ॥

इति चातुर्मास्ये [ सप्तमे ऽध्याये ] पञ्चमं खण्डम् ॥

इति[6] सप्तमो ऽध्यायः ॥

---

1 The mantra is corrupt *Cp Mān I.* 7. 8 8.

2 MS II, 10, 2 132 18

3 Cp MS I, 10, 8 148, 20–149. 1.

4 Cp MS IV, 3, 3 42 4, वर्ष्ये उदके यजेत, Āp VIII, 22. 5, 6

5 The ms पशुकर्मोत्तमता॰.

6 The ms adds प्रास्त्रौमिके.

प्राकृतीषु संस्थासु षोडशिवर्जमग्निमुत्तरवेदिं चिन्वीत ॥ १ ॥ सावित्रनाचिकेतौ चातन्नियौत्तरवेदिं चिन्वीत सत्त्रार्हीनेषु ॥ २ ॥ तं चेष्यमाणो ऽमावास्यायामुपनीय हविर्जुहूं प्रथमं संमृज्यास्रुग्गृहीतेनाज्येन युञ्जानः प्रथममिति[1] सावित्राण्यूर्ध्वस्तिष्ठञ्जुहोत्यृचा स्तोममिति[2] द्वितीयां पूर्णाहुतिं पूर्णाम् ॥ ३ ॥ षण्णवीमग्निं कल्माषी[3] सुषिरां सावित्रप्रभृतिभिरात्रस्ते फलग्रहेयाँ धूस्तस्य ॥ ४ ॥ इयामगृभ्णन्निंत्यश्वाभिधानीमादाय प्रतूर्तं[4] वाजिन्नित्यश्वमभिदधाति ॥ ५ ॥ युञ्जाथां रासभं युवमित्युत्तर गर्दभम् ॥ ६ ॥ योगे योगे इत्यश्वपूर्वा वल्मीकामभियन्ति[5] ॥ ७ ॥ अग्निं पुरीष्यमङ्गिरस्वदच्छेमे इति[6] पुरुषमायान्तमनुमन्त्रयते येन संगच्छेत[7] ॥ ८ ॥ तमिति निर्दिशति ॥ ९ ॥ आगत्य वाज्यध्वानमिति[8] सूत्रं प्राप्य जपति ॥ १० ॥ आक्रम्य वाजिन्नित्यश्वेन मृदमाक्रमयति ॥ ११ ॥ य द्विष्यात्तं ध्यायेदमुमभितिष्ठेति[8] ॥ १२ ॥ द्यौस्ते पृष्ठमित्यश्वस्य पृष्ठमभिमृशति ॥ १३ ॥ उत्क्रामे ॥ उदक्रमीदित्युत्क्रान्ते[9] जपति ॥ १४ ॥ आ त्वा जिघर्मीति[9] पदे हिरण्यं निधायाभिजुहोति ॥ १५ ॥ परि वाजपतिरि[9]-त्यभ्रया पदं परिलिखति ॥ १६ ॥ देवस्य त्वेति[9] खनति ॥ १७ ॥ अपां पृष्ठमसीति[10] पुष्करपर्णमाहरति ॥ १८ ॥ शर्म च स्थं इति कृष्णाजिनं च पुष्करपर्णं च संस्तृणाति[11] ॥ १९ ॥ व्यचस्वती संवसेथामित्युत्तरलोम कृष्णाजिनमधस्तादधिपुष्करपर्णे ॥ २० ॥ तयोर्मृदं संभरति पुरीष्यो ऽसीति[10] यजुरुत्तराभिर्गायत्रीभिर्ब्राह्मणस्योत्तराभिस्त्रिष्टुब्भी[12] राजन्यस्योत्तराभिर्जगतीभिर्वैश्यस्य ॥ २१ ॥ सर्वत्र यजुः ॥ २२ ॥ यं कामयेत स्तुष्टुयादिति तस्य गायत्रीभिश्च त्रिष्टुब्भिश्चाष्टभिश्च संभरेत्

1 MS II, 7, 1

2 MS III 13 1 159 13 Properly the mantra is for the Aśvamedha

3 MS II, 7 2

4 The ms चरिमकायचत्स्.

5 Very probably one sutra is missing in our text Cp Man VI, 1 1 11, 12

6 The ms सा मगच्छे (for येन संगच्छेत)

7 The ms तौ°

8 Identical with MS III 1 4 5 7

9 The ms उदक्रान्ते

10 MS II 7 3

11 Identical with MS III, 1. 5 6, 4-5,

12 The ms second hand °भीः.

॥ २३ ॥ अयं ते योनिर्ऋत्विय इति संभृतमभिमृश्यापो देवीरिति[1] स्फ्येन खनति[4] ॥ २४ ॥ वल्मीकवपामाधाय सुजातो ज्योतिषेति[2] मौञ्जेन दाम्नोपनह्यत्यर्कमयेण वा ॥ २५ ॥ उदु तिष्ठ स्वध्वरेत्युर्ध्वमुच्छ्रयति ॥ २६ ॥ सजातो गर्भ[2] इति हरति ॥ २७ ॥ स्थिरो भव वीड्वङ्ग इति गर्दभ आदधाति[6] ॥ २८ ॥ भरन्तमिमिति[2] यन्ति ॥ २९ ॥ ओषधय प्रतिगृभ्णीतेति[5] परिस्तृणाति ॥ ३० ॥ दर्भेषु सादयति ॥ ३१ ॥ वि पाजसेति[5] विस्रँसयति । वि ते मुञ्चामीति[7] च ॥ ३२ ॥ आपो हि ष्ठेत्यद्भिरुपसृजति ॥ ३३ ॥ अजलोमभिः कृष्णाजिनलोमभिरर्मकपालैः[10] शर्कराभिः सिकताभिर्वेणवशङ्कारैरिति लोमवर्ज चूर्णं कृतैर्मित्र संसृज्येति[8] संसृजति ॥ ३४ ॥ संसृष्टासो न्वा पत्नी करोति[11] ॥ ३५ ॥ मखस्य शिरो ऽसीति[13] पिण्डमभिमन्त्र्य वसवस्त्वा कृण्वन्त्विति[13] त्र्युद्धिं चतुरश्रीं[14] करोति ॥ ३६ ॥ उत्तमे तृतीये ऽदित्या रास्नासीति[13] रास्नां करोति ॥ ३७ ॥ अंशिण्यौ रास्नायाश्च समवाये[15] स्तनौ कृत्वादितिष्टे बिलं गृभ्णात्विति[13] द्वारं करोति ॥ ३८ ॥ कृत्वाय सा महीमित्यभिमन्त्र्य सिकतासु निषिञ्चति ॥ ३९ ॥ शेषस्याषाढां ऽस्यासिरिति तामिष्टकां करोति ॥ ४० ॥ शुष्कामुखाँ वसवस्त्वा धूपयन्त्वित्यश्वशकेन गार्हपत्ये धूपयति ॥ ४१ ॥ अदितिष्ट्वेति[13] गर्तं खात्वा देवानां त्वा पत्नीरित्येवं दधाति ॥ ४२ ॥ तूष्णीमुखां[16] पचनेन पर्युह्य धिषणा त्वा देवीत्यग्निना समिन्द्धे ॥ ४३ ॥ ग्नास्त्वा देवीरिति[13] पच्यमानामनुमन्त्रयते । मित्रैतां त उखां परिददाम्यभित्त्यै एषा मा भेदीति[17] च ॥ ४४ ॥ मित्रस्य चर्षणीधृत इत्यासामर्म् ॥ ४५ ॥ देवस्त्वा सवितोद्वपत्विति[13] पक्वामुद्वपति ॥ ४६ ॥ उत्तिष्ठ बृहती भवेत्युच्छ्रयति ॥ ४७ ॥ मित्रैतां ते[3] इत्यभिमन्त्र्य वसवस्त्वाच्छृन्दन्त्वित्यजक्षीरेणाच्छृणत्ति चतुः ॥ ४८ ॥ वैश्यस्य राजन्यबन्धोर्वा शिर

1 MS II. 7. 3.

2 MS II 7 4.

3 The ms adds योनिरिति.

4 This ■ not clear, as the digging has already been done. The original ms has खति, which is changed to खनति by the second hand

5 The ms च

6 The ms उदु तिष्ठ स्व॰रित्युर॰ first hand, उदु तिष्ठन्न इत्यु॰ second hand

7 Identical with MS III 1 6 beg.

8 MS II 7 5

9 MS II 12 3 147 1

10 ? The ms ॰रर्मकपालैर्नीकाभि first hand, ॰रर्मकपालै॰ second hand.

11 The ms second hand चूर्णीकृ॰.

12 The sûtra is hopelessly corrupt We could have something like this सँसृष्टामिति पत्न्यै प्रयच्छति । सोखां करोति.

13 MS II 7. 6.

14 The ms second hand ॰श्रीं.

15-15 The ms first hand ध्रश्रिकृ समवाये (pointing to अंशिरास्नासमवाये ?).

16 The ms विस्॰

17 The ms ॰मुखाग्य first hand, ॰मुन्मया॰ second hand

18 The ms first hand मित्रैता त्वा उपाभिन्त्या

19 The ms first hand मभिनार्ने च.

20 The ms second hand इति उखां.

आहरतीपुद्धतस्याशनिहतस्य वा ॥ ४९ ॥ सप्त मापानुपस्पुप्य यमगाथा गायति—

यो ऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी ।
यमं भङ्गश्रवो गाय यो राजानपरोध्य ॥
यम गाय भङ्गश्रवो यो राजानपरोध्य. ।
अहरहर्नयमानो गामश्वं पुरुषं यम. ॥
वैवस्वतो न तृप्यति सुराया इव दुर्मद ।
येनापो नद्यो धन्वानि येन द्यौरुमा पृथिवी च दृढा ॥

इति ॥ ५० ॥ वल्मीकवपां सप्तधा विवृएणाँ शिरसः स्थाने प्रतिनिदधाति ॥ ५१ ॥

अर्यं यो ऽसि यस्य त इदं शिर एतेन त्वं शीर्षण्वानेधि ।
इदमस्माकं भुजे भोग्याय भूयात् ॥

इति शिर आददीत ॥ ५२ ॥

इति चयने [ प्रथमे ऽध्याये ] प्रथम खण्डम् ॥

हिरण्यकेशान्क्षुरान्हिरण्याक्षानय.शफान् ।
अश्वाननश्नतो दानँ यमो राजाधितिष्ठति ॥

इत्याहरति ॥ १ ॥ पूर्वमुख्याहृतिः ॥ २ ॥ पौर्णमास्यां पञ्च पशूनालभते ऽश्वमृषभं वृष्णिं बस्तं प्राजापत्यं तूपरमिति मुष्करान् ॥ ३ ॥ उपाकरोति—अभिभ्य कामाय जुष्टमिति ॥ ४ ॥ वैश्वानरीयो द्वादशकपालः पशुपुरोडाशः ॥ ५ ॥ चतुर्विंशति सामिधेनीः पराचीरन्वाह ॥ ६ ॥ एकादश नित्या उपेमसृक्षीति तिस्रः समास्त्वाग्न इति दर्श ॥ ७ ॥ अमुत्रभूयादित्यामयाविनः ॥ ८ ॥

राये अग्ने महे त्वा दानाय समिधीमहि ।
ईडिष्वा हि महे वृषन्नग्ने होत्राय पृथिवीम् ॥

इत्यनामयाविनः ॥ ९ ॥ हिरण्यगर्भ इत्याघारः ॥ १० ॥ ऊर्ध्वा अस्य समिध इत्याप्रीः ॥ ११ ॥ पुरुषशिरसा सह पर्यग्नि कृत्वा तान्पर्यग्निकृतानुत्सृज्य प्राजापत्यवर्जं शिराँसि प्रच्छिद्य यस्माद्धूदादिष्टकाः करिष्यन्स्यात्तस्मिन्शरीराणि न्यस्य वह्नयाँ मृदा शिराँसि प्रलिप्य प्राजापत्येन तन्त्रँ सँस्थापयन्ति ॥ १२ ॥

1 After इदं the ms adds अहं.
2 1 The ms first hand पूर्वशि॰
3 The ms ॰नायजते
4 MS IV 12 4 187 17
5 MS II 12 5 148 11
6 The ms second hand दशामिद्धी
7 MS III 4 6 51, 15-16.
8 The ms second hand दाता
9 MS II, 7 15 96 13
10 MS II 12, 6. 149 14
11 The ms second hand पर्यग्नि
12 The ms तस्मात्मरीराए रस्य बहुन्य

पशूनेतानालभेत वायवे नियुत्वते श्वेतं तूपरमजमालभेत ॥ १३ ॥ प्राजापत्यो द्वादशकपालः पशुपुरोडाशः ॥ १४ ॥ समानमन्यत् ॥ १५ ॥ आग्नावैष्णव एकादशकपाल आदित्येभ्यो घृते चरुरग्नये च वैश्वानराय द्वादशकपाल इति दीक्षणीया ॥ १६ ॥ समानमा दीक्षाहुतिभ्यः पूर्णाहुतिवर्जम् ॥ १७ ॥ आध्वरिकीर्हुत्वाकूतमग्निमिति[1] पञ्चाग्निकीर्जुहोति ॥ १८ ॥ अन्त[त]ः पूर्णाहुतिः ॥ १९ ॥ पुरस्तात्प्राचीयमस्याहवनीय उखां प्रवृणक्ति—या सु भित्र्यां इति ॥ २० ॥ जातमवदध्यादित्याम्नातानि काम्यानि ॥ २१ ॥ आयतघ्नौ[3] समिध आदधाति द्रुवं इति क्रमुकं धूमाक्षम् ॥ २२ ॥ प्रजाते परस्या अधि संवत इत्यौदुम्बरीम् ॥ २३ ॥ परमस्याः परावत इति वैकङ्कतीम् ॥ २४ ॥ यदग्ने यानि कानि चेति[4] पञ्चभिः पञ्चौदुम्बरीरपरशुवृक्णाः ॥ २५ ॥ ये जनेषु मलिम्लव इति वैकङ्कतीम् ॥ २६ ॥ दंष्ट्राभ्यामित्याश्वत्थीम् ॥ २७ ॥ यो अस्मभ्यमरातीयादिति[5] तैल्वकीं[6] यद्यभिचरति ॥ २८ ॥ उदेषां बाहून् ॥ संशितं म इत्यौदुम्बर्या[7] यजमानं वाचयति ॥ २९ ॥ ब्रह्म क्षत्रमित्यनाविष्टवृक्णाम् ॥ ३० ॥ उखाये ध्रियमाणे वृष्टिकामस्य याः सौरी रश्मिवतीस्तासां तिसृभिस्तिस्र आश्वत्थीः समिध आदध्याद् आजस्वतीभिः सौरीभिरवृष्टिकामस्य ॥ ३१ ॥ यदि पशुपतिरभिमन्येत भिषग्वतीभिराग्नेयीभिः[8] ॥ ३२ ॥ यदि नश्येदग्ने ऽभ्यावर्तिन् ॥ अग्ने ऽङ्गिरः ॥ पुनरूर्जा[9] ॥ सह रय्येत्युपतिष्ठते ॥ ३३ ॥ सौवर्णं[10] रुक्मं पाशवन्तमेकविंशतिनिर्बाधम् ॥ ३४ ॥

इति चयने [ प्रथमे ऽध्याये ] द्वितीयं खण्डम् ॥

ईशानो रुक्म इत्युपरिष्टान्निर्बाधं प्रतिमुञ्चते ॥ १ ॥ नक्तोषामेति[1] कृष्णाजिनम् ॥ २ ॥ सुपर्णो ऽसि गरुत्मानित्यभ्युपरुन्धति ॥ ३ ॥ प्रादेशमात्रपादारत्निमात्रशीर्षण्या मौञ्जशिक्यौदुम्बर्यासन्दी फलकास्तीर्णा ॥ ४ ॥ तस्यां[10] पशुधावं मौञ्जशिक्यमवधाय[11]

मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनौ बिभर्तु त्वाम् ।

[तां] विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्तु ॥

इत्यादधाति ॥ ५ ॥ विश्वा रूपाणीति[2] शिक्यपाशं प्रतिमुञ्चते ॥ ६ ॥

1 MS II 7 7.

2 MS III 1, 9 11 19 sqq

3 1 The ms first hand आयामम्भौ.

4 See MS ib 12, 4.

5 Here the Sūtrakara deviates from his Saṃhitā (ib 9).

6 The ms रश्मिवती यासां.

7 The sūtra is based on KS XXII. 12 67 16 The mantras alluded to are found neither in MS nor in KS

8 MS I 7 1.

9 MS II. 7 8

10 The ms तस्या.

11 The ms अवदध्याद्.

नक्तोषासेति[1] कृष्णाजिनम् ॥ ७ ॥ सुपर्णो ऽसि गरुत्मानित्युख्यमुद्धरन्नुपरि-नाभि विपरिवर्तयति[2] ॥ ८ ॥ विष्णोः क्रमो ऽसीति पर्यायैर्यजमानश्चतुरः क्रमान्क्रामति ॥ ९ ॥ अक्रन्ददग्निरिति क्रमाणां पारे जपति ॥ १० ॥ दक्षिणावर्तते—[अग्ने] ऽभ्यावर्तिन्निति ॥ ११ ॥ आ त्वा हार्षमित्यावृत्य जपति ॥ १२ ॥ उदुत्तममिति शिक्यपाशमुन्मुञ्चते ॥ १३ ॥ अग्ने बृहन्नुषसामित्युन्मुच्य जपति ॥ १४ ॥ हंसः शुचिषदित्यादधाति ॥ १५ ॥ सन्नवतीभिरुपतिष्ठते । दिवस्परीति[3] च वात्सप्रेण ॥ १६ ॥ रुक्मप्रतिमोचनादि वत्सप्रान्तं यजमानः करोति ॥ १७ ॥ अनुगम[यत्याहवनीयम् ] ॥ १८ ॥ सुप्तिकरणाद्याध्वर्यिकेण दीक्षोपाये व्याख्यातः ॥ १९ ॥ व्यत्यासं क्रमणं वात्सप्रेण करोति पूर्वेद्युः क्रामत्युत्तरेद्युर्वात्सप्रम् ॥ २० ॥ येन देवा ज्योतिषेत्यहरहर्घृताक्तां समिधमादधाति ॥ २१ ॥ अक्षन्नत् इति व्रतकालेष्वन्नाकाम् ॥ २२ ॥ समिधाग्निमिति[5] ध्यानकाम् ॥ २३ ॥ गायत्र्या ब्राह्मणस्यादध्यात् प्र प्रायणाभिरिति[6] त्रिष्टुभा राजन्यस्य द्वाभ्यां गायत्रीभ्यां वैश्यस्य ॥ २४ ॥ प्रयास्यन्नसि विहारमादधाति ॥ २५ ॥ उदु त्वा विश्वे देवा इत्यग्निमुपच्छति ॥ २६ ॥ हंसः शुचिषदित्यादधाति ॥ २७ ॥ सन्नवतीभिरुपतिष्ठते ॥ २८ ॥ प्रेदग्ने इति प्रयापयति ॥ २९ ॥ अक्रन्ददग्निरिति[7] सर्जवभिमन्त्रयते ॥ ३० ॥ यद्युखा भस्मना प्रतिपूर्येतेष्टकासु कार्यम् ॥ ३१ ॥ पुरीषे पशुकामः कुर्वीत ॥ ३२ ॥ अप्सु यायावरः प्रवपेत् ॥ ३३ ॥ आपो देवीरिति[8] प्रवपति ॥ ३४ ॥ प्रसद्य भस्मना ॥ पुनरासद्येति[9] भस्ममुष्टी प्रत्यायपति ॥ ३५ ॥ पुनरूर्जा[10] ॥ मह रय्येति[10] निवृत्य बोधा मे अस्येत्युपतिष्ठते ॥ ३६ ॥

इति चयने [ प्रथमे ऽध्याये ] तृतीय खण्डम् ॥

दीक्षितस्येष्टकाः कुर्वन्त्यदीक्षितस्य वा ॥ १ ॥ न त्वेवानालब्धप्राजापत्यस्य ॥ २ ॥ मृन्मयीरव्यालिखिताश्चतुरश्रा दक्षिणावृतः सव्यावृत ऋजुलेखाश्च निर्मन्थ्येन लोहिनीः[11] पचन्त्यन्वाहार्यपचनेन वा ॥ ३ ॥ समाप्तासु दीक्षासु क्रमवात्सप्रे ॥ ४ ॥ तस्या यततिनति (?) देवयजनमध्यवस्यति[12]

1 MS II 7 8

2 † The ms विपरिवर्ति first hand, धारयमाणो second hand

3 MS II 7 9

4 The ms first hand क्रम वत्स॰ The second hand is worthless.

5 MS II 7 12 91, 9

6 MS II 10, 1 133, 5

7 MS II, 7, 10

8 MS II 6, 12 71 14

9 † The ms second hand अस्तराज्ञमभि॰

10 † The ms विश्न्यसश first hand, विह॰त्य second hand

11 In the ms लोहिनी is put after ॰श्रा लिखिता.

12 Cp KS XX. 1. 18 7 अपेत वीत वि च सर्पतात इति देवयजनमध्यवस्यति

॥ ५ ॥ आहवनीयदेशे गार्हपत्यं चिनोति ॥ ६ ॥ मण्डलं चतुरश्रं वा व्यायाममात्रं विमायोद्धत्याद्भिरवोक्ष्य यो नो अग्नि[1] ॥ मयि गृह्णामीति[2] जपति ॥ ७ ॥ चितः स्थ परिचितः स्वेत्येकविंशत्या शर्कराभिः परिश्रयति ॥ ८ ॥ अग्नेर्भस्मासीति[3] सिकता निवपति ॥ ९ ॥ संज्ञानमसीत्यूषान्न्युप्य व्यूहति ॥ १० ॥ अयं सो अग्निरिति[4] प्रभृतिभिश्चतस्रो मध्ये प्राचीरुपदधाति ॥ ११ ॥ इडामम[5] ॥ अयं ते योनिर्ऋत्विय इति द्वे समीची पुरस्ताच्चिदसि तया देवतयाङ्गिरस्वद्ध्रुवासीदेति[6] ॥ १२ ॥ परिचिदसीति[7] द्वे समीची पश्चात् ॥ १३ ॥ त्रयोदश च लोकंपृणाः ॥ १४ ॥ पृष्ठो दिवीति[8] चात्वालदेशात्पुरीषमाहृत्य व्यूहति ॥ १५ ॥ एवं सर्वाश्चिनोति ॥ १६ ॥ पञ्चचितिकं प्रथमं त्रिचितिकं द्वितीयमेकचितिकं तृतीयम् । सर्वत्र वैकचितिकम् ॥ १७ ॥ संचिते समितं संकल्पेथामित्युख्यं निवपति ॥ १८ ॥ मातेव पुत्रमिति शिक्यादुखां विमुञ्चते ॥ १९ ॥ न रिक्तामवेक्षते ॥ २० ॥ प्रत्यग्दक्षिणा नैर्ऋतीभिर्यन्ति ॥ २१ ॥ सदस्य पारे इति शिक्यमादत्ते ॥ २२ ॥ तिस्रस्तुषपक्वाः कृष्णा इष्टकाः[9] स्रक्त्य इरिणे ऽमुं बध्नन्तीमिति[10] तिसृभिः परां परामुपदधाति ॥ २३ ॥ न तयादेयसं करोति ॥ २४ ॥ यं ते देवीति शिक्यमधिवपति[11] ॥ २५ ॥ रुक्मसूत्रमासन्दीमिति निधाय सदस्य पारे रजसं इत्यपः परिषिञ्चन्पर्यैति ॥ २६ ॥ भूत्यै नम इत्युक्त्वा निवृत्य

> शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
>
> शं योरभिस्रवन्तु नः ॥

इति परोगोष्ठं मार्जयन्ते[12] ॥ २७ ॥ अनपेक्षमाणाः प्रत्यायन्ति ॥ २८ ॥ निवेशनं इति गार्हपत्यमुपतिष्ठन्ते ॥ २९ ॥ येन देवा ज्योतिषेत्याहवनीयं यजमानः समिन्धे ॥ ३० ॥ प्रायणीयाप्रभृति समानमोपसद्भ्यः ॥ ३१ ॥ पूर्वाह्णिकीमुपसदं कृत्वा यूपं छित्त्वा वेदिं कृत्वाग्निं[13] विदधाति सप्तपुरुषं त्रीन्प्राचश्चतुरस्तिर्यक् ॥ ३२ ॥ पुरुषमात्राणि पक्षपुच्छानि भवन्ति ॥ ३३ ॥ आत्मा चतुःपुरुषो[14]

1 MS I. 6 1.

2 MS II. 7. 11

3 The ms first hand यश्व, which is struck off by the second hand

4 MS II. 13 11 161 14.

5 The ms पुरीषमग्नीति हृत्य first hand, पुरीषमसीति पुरीषमाहृत्य second hand.

6 The ms चैक॰.

7 The ms न निदक्रम॰.

8 MS II. 7. 12.

9 The ms इष्टकास्तिस्रः.

10 The ms शुंधध्व॰.

11 ? The ms शिक्यं नाभिनयति.

12 The ms adds इत्युभयतो.

13 The ms second hand उदीच' (for तिर्यक्).

14 The ms adds अग्निर्.

भवति ॥ ३४ ॥ अरत्निं पक्षयोरत्युपदधाति[1] ॥ ३५ ॥ प्रादेशमात्रं पुच्छे[2] वितस्तिं वा ॥ ३६ ॥ प्रजापतिष्ट्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति विहितस्य मध्यं[3] विमृश्य सजूरब्दं इति दर्भस्तम्बे हिरण्ये च मध्ये अग्निं जुहोति ॥ ३७ ॥ द्वादशयुक्तेन सीरेणाग्निं कृषति षड्युक्तेन वा ॥ ३८ ॥

इति चयने [ प्रथमे ऽध्याये ] चतुर्थं खण्डम् ॥

सं वरत्रा दधातन निराहावान्कृणोतन ।
सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्तमक्षितम् ॥
निष्कृताहावमवटं सुवरत्रं सुषेचनम् ।
उद्रिणं सिञ्चे अक्षितम् ॥

इति युगवरत्राणि संबध्नाति ॥ १ ॥ युना युनक्तिवति[4] युनक्ति ॥ २ ॥ लाङ्गलं पवीरवमिति[5] कृषति ॥ ३ ॥ पुच्छादधि शिरः शिरस्तः पुच्छं पुच्छतः शिरस्तिस्रः सीताः संपादयति ॥ ४ ॥ एतेन धर्मेण दक्षिणायतो दक्षिणस्मात्पक्षादुत्तरमुत्तरस्याः श्रोण्या दक्षिणमंसं दक्षिणस्या उत्तरम् ॥ ५ ॥ द्वादश सीताः संपाद्य प्राच उत्सृजन्ति[6]—विमुच्यध्वमघ्न्या इति ॥ ६ ॥ विसृज्याध्वर्यवे वैकर्पणान्ददाति ॥ ७ ॥ कृष्टे[7] सर्वौषधानि यवांश्च मधुयुतान्यपति—या ओषधय इति चतुर्दशभिः ॥ ८ ॥ यस्य न वपेत्सं मनसा ध्यायेत् ॥ ९ ॥ तस्येध्मे ऽपि[11] कुर्यात् ॥ १० ॥ ये वनस्पती नामालफलास्तेषामग्नीषोमीयायेध्मे संनहेत् ॥ ११ ॥ शिष्टान्मनसा ध्यायेत् ॥ १२ ॥ व्युत्क्रष्टो लोष्टादिस्तेभ्यो यथाहृतां मध्याय संभरति—मा नो हिंसीदिति[13] चतसृभिः ॥ १३ ॥ यां जनतां क्षुध्यन्तीमिच्छेत्तां प्रतीममूर्जमित्येवमुत्करादददीत ॥ १४ ॥ यथा मन्येत तस्यां निहनिष्यतीत्येवमुपक्रमेत ॥ १५ ॥ कामं कामदुघे धुक्ष्वेति[13] लोष्टान्कृष्टां चाभिमृशति ॥ १६ ॥ व्याघारणान्तामुत्तरवेदिं करोति ॥ १७ ॥ अग्निदत्तरवेदिः ॥ १८ ॥ एतेन धर्मेणापरिमिताभिः शर्कराभिरग्निं परिश्रयति ॥ १९ ॥

व्रज कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।

1 Nearly identical with MS III 2 4 21 2

2 The ms पुच्छ.

3 The ms मध्यम first hand, मध्यम second hand.

4 MS II 12. 3 146 2

5 The ms second hand विश्वाहादस्त॰

6 MS II, 7, 12.

7 The ms पुच्छादधि शिरस्कतः पुच्छंसुन (पुच्छादंसत second hand)

8 The ms ॰जने Cp MS III 2 3 21 9

9 1 The ms सर्वे कृष्टे

10 MS II 7 13

11 The ms निवपेत् (for न वपेत्)

12 ° The ms इमव (for तस्येध्मे ऽपि) Cp MS III, 2 4 21 17

13 MS II 7, 14

पुरः कृणुध्वमयसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥
परि त्रिविष्ट्यध्वरँ यात्यग्नी रथीरिव ।
आ देवेषु प्रयो दधत् ॥

परि वाजपतिरिति परिश्रितमभिमन्त्र्याग्ने तव श्रवो वय इति सिकता निवपति ॥ २० ॥ संज्ञानमसीत्यूपान्व्युप्याप्यायस्वेति॥ सं ते पयाँसीति[2] व्यूहति ॥ २१ ॥ सीतामध्ये कुम्भेष्टका उपदधाति षट् कुम्भा द्वे द्वे कृषं च कृष्णी [च] चतस्रो ऽपचतः स्वयमातृण्णालोके द्वे दिक्षु समन्या यन्तीति[3] यजुषा षट् ॥ २२ ॥ प्रथमयाद्भिः पूरयित्वोत्तराभिर्द्वादशोपधाय द्वाभ्यामुपतिष्ठेत ॥ २३ ॥ दिवि श्रयस्वेति[4] नैवारं चरुं पयसि श्रृतमुपदधाति ॥ २४ ॥

इति चयने [ प्रथमे ऽध्याये ] पञ्चम खण्डम् ॥

सूददोहसा सह लोकंपृणाः सर्वेष्टकासु तया देवतया करोति ॥ १ ॥ शीर्षाण्यवसेरथाप्ययें इति लोको मध्ये स्वयमातृण्णालोकः ॥ २ ॥ वर्जयेत्कृष्णां भिन्नामलक्ष्मीमिति[8] ॥ ३ ॥ दक्षिणावृद्भिर्दक्षिणं पुच्छमुपदधाति सव्यावृद्भिरुत्तरमृजुलेखाभिर्दोषम् ॥ ४ ॥ अग्रेणाहवनीयमानडुहे चर्मणि मुख्याक्षितीनामासाद्य संप्रेष्यति—चित्यमभिभ्य इत्युपांशु प्रणीयमानेभ्यो ऽनुब्रूहीत्युच्चैः ॥ ५ ॥ प्राचीमनु प्रदिशमिति[9] प्रणयति ॥ ६ ॥ अश्वपूर्वा यन्ति ॥ ७ ॥ उत्तरं पुच्छाप्ययं प्रत्याक्रम्येन्द्र सानसिं[10] रयिमित्याक्रमणमुपदधाति ॥ ८ ॥ पुरस्तात्प्राचीनास्तेन स्वयमातृण्णालोकमभ्यस्थां विश्वा इत्याक्रमयति ॥ ९ ॥ प्राञ्चं प्रक्रमय्य प्रत्यञ्चमभ्यावर्तयति ॥ १० ॥ तपो योनिरसीति[11] पदे पुष्करपर्णमुपदधात्यपां पृष्ठमसीति[12] च ॥ ११ ॥ अधस्तान्नाभिपुष्करपर्णे रुक्मं ब्रह्म जज्ञानमिति[13] पश्चात्प्राञ्चमधस्तान्निर्बाधं सादयति[14] ॥ १२ ॥ कृणुष्व पाजे इति पञ्चभिरक्ष्णया व्याघारयति ॥ १३ ॥ हिरण्यगर्भ[15] इति रुक्मे सौवर्णं पुरुषमुत्तानमुपदधाति ॥ १४ ॥ द्रप्सश्चस्कन्देत्येभिमन्त्र्य नमो ऽस्तु सर्पेभ्य इति तिसृभिरनुदिशति व्याघारयति च यथा रुक्मम् ॥ १५ ॥ अयमभि·

1 This verse occurs in MS IV. 13, 4 203, 3 without any variations, and there also it is followed by परि वाजपति·.

2 MS II, 7, 14

3 MS II, 7, 11 89 6.

4 The ms दन्नष्ट्वा first hand, अभीष्टका second hand

5 MS II, 13, 1.

6 The sûtra is hopelessly corrupt Cp Mān VI 1 6 18-20.

7 ?

8 ? The ms ·लक्ष्मीति.

9 MS I 6, 2

10 MS IV, 13, 3 184, 13.

11 MS II, 13, 1 153 6

12 MS II, 7 3 76, 16.

13 MS II, 7 15,

14 ? The ms पश्चात्प्रसमधस्तान्निर्बाध.

सहस्रियो इति स्रुचं कार्ष्मर्यमयीं घृतस्य पूर्णां दक्षिणतः सादयति ध्रुवो यज्ञस्येति[1] दध्न औदुम्बरीमुत्तरतः ॥ १६ ॥ तेजोऽसीति[1] हिरण्येष्टकां शर्करां स्वयमातृण्णामश्वेनोपघ्राप्य भूर्भुवः स्वरित्यभिमन्त्र्य ध्रुवासि धरुणेति[1] चाविदुषा सह ब्राह्मणेन[2] प्रजापतिष्ट्वा सादयत्विति पुरुषे सादयति ॥ १७ ॥ पुरुषस्यास्ये छिद्रं करोति ॥ १८ ॥ भूरिति प्राचीमुदूहेदिति[3] ब्राह्मणव्याख्यातम् ॥ १९ ॥ चित्ति जुहोमीत्यातृण्णे जुहोति ॥ २० ॥ पृथिवीमाक्रमिषमिति यजमानं वाचयति ॥ २१ ॥ यजमानोऽविदुषे वरं ददात्यविद्वानध्वर्यवे[5] ॥ २२ ॥ यास्ते अग्न आर्द्रा योनय इति कुलायिनीम् ॥ २३ ॥ काण्डात्काण्डात्प्ररोहन्तीति[4] दूर्वेष्टकां लोष्टं दूर्वामिश्रं संसृष्टं स्वयमातृण्णायाः ॥ २४ ॥ यास्ते अग्ने सूर्ये रुच इति वामभृतं हिरण्यशकलावभ्यूह्य[7] ॥ २५ ॥ विराड् ज्योतिरधारयद्भूरसि भुवनस्य रेत इति रेतःसिचम् ॥ २६ ॥ स्वराड् ज्योतिरधारयद्भूरसि भुवनस्य रेत इति द्वितीयाम् ॥ २७ ॥ सम्राड् ज्योतिरधारयदिति[6] तृतीयाम् ॥ २८ ॥ प्रथमायां चितौ यून उपदध्यान्मध्यमायां विवयसो विहृता स्थविरस्य ॥ २९ ॥ ध्रुवा चि न्वीतेति द्वयोर्ब्राह्मणम्[8] ॥ ३० ॥ बृहस्पतिष्ट्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीमिति[9] विश्वज्योतिषम् ॥ ३१ ॥ उरपुरा नामासीति[4] मण्डलामपदध्यात् ॥ ३२ ॥ ऋतव्या उपदधाति—मधुश्च माधवश्चेति[10] पर्यायैर्द्वे द्वे चित्यां चित्यां चतस्रो मध्यमायाम् ॥ ३३ ॥ द्वे द्वे पर्यायेणाभिरन्तःश्लेषी ऽसीत्येनुपजेत् ॥ ३४ ॥ धर्मेष्टका उपधायाषाढासीत्यषाढाम् ॥ ३५ ॥ कूर्मं कच्छपं मत्स्यं दध्ना मधुना घृतेन मधु वाता ऋतायत इति तिसृभिः समाज्याप त्वा गह्वरसादयामीत्यभिमन्त्र्य मही द्यौरिति[6] पुरस्तात्प्रत्यञ्चं सादयति ॥ ३६ ॥ औदुम्बरमुलूखलमुसलं प्रादेशमात्रं चतुःस्रक्ति ॥ ३७ ॥

इति चयने [ प्रथमे ऽध्याये ] षष्ठ खण्डम् ॥

यच्चिद्धि त्वं गृहे गृह उलूखलक युज्यसे ।
[illegible] द्युमत्तमं वद जयतामिव दुन्दुभिः ॥

इति व्रीहीनवहत्य सहमील्युपदधाति—इदं विष्णुरिति[6] दक्षिणतः पुरस्तात्स्वयमातृण्णायाः ॥ १ ॥ उखां सिकताभिः पूरयति दध्ना मधुना घृतेन वा—अग्ने युक्ष्वा हि ये तवेत्[12] ॥ युक्ष्वा हि देवहूतमानिति[11] संहिताभ्यामभिजुहोति ॥ २ ॥ चि-

1 MS II. 7. 15.
2 The ms adds सह.
3 MS III. 2. 6 24 15.
4 MS II. 10 6 139. 8.
5 The ms ददाति ः [illegible] विद्वा०.
6 MS II. 7. 16.
7 Thus the ms second hand The first hand ०शकलावहत्य मूध्नि-
8 "According to the Brāhmana (III 2. 6 25. 8) there may be only two of these ıstakās" ?
9 MS II 8 14 117 7
10 MS II 8. 12.
11 MS II 7. 17.
12 The ms ınserts अग्ने before युक्ष्वा. Cp MS ıb 101 10

धाय नक्तोषासा[1] ॥ स्रुता देवेभिरित्यादत्ते ॥ ३ ॥ पृथिवि पृथिव्यां सीदेति[1] सादयत्युत्तरतः पुरस्तात्स्वयमातृण्णाया यावत्युलूखलम् ॥ ४ ॥ समित्स्रवन्तीति[2] दध्ना मधुमिश्रेण शिरांसि पूरयित्वा छिद्रेषु हिरण्यशकलानप्यस्यति—प्राचे त्वेति[2] दक्षिणस्मिन्कर्णच्छिद्रे दक्षे त्वेति[2] सव्ये मासे त्वेति[2] दक्षिणस्मिन्नक्षिच्छिद्रे ज्योतिषे त्वेति[2] सव्ये ऽभूदिदमिति[2] दक्षिणस्मिन्नासिकाछिद्रे ऽग्नेर्वैश्वानरस्येति[2] सव्ये ऽग्निस्तेजसेत्यास्ये रुक्मो वर्चसेत्यवकर्तने ॥ ५ ॥ सहस्रदा असीति[3] पुरुषशिरो ऽभिमन्त्र्यादित्यं गर्भमित्युखायामुत्तानमुपदधाति पश्चादवकर्तनतः ॥ ६ ॥ चित्रं देवानामित्यर्धर्चाभ्यामासिच्छिद्रयोर्हुत्वा पश्चात्पुरुषशिरसः पुरुषचितिमुपदधाति पुरुषस्य प्रतिमाम् ॥ ७ ॥ मा छन्द इति द्वादश पर्यायाः ॥ ८ ॥ तेषां तिसृभिस्तिसृभिरेकैकेन ॥ ९ ॥ तेन छन्दसेत्युपजेत् ॥ १० ॥ वातस्य ध्रतिमिति[4] पूर्वार्धे ऽश्वशिर उत्तराभिस्तिसृभिर्यथासमाम्नातमितराणि पश्चार्धे गोशिरो दक्षिणार्धे ऽविशिर उत्तरार्धे [बस्त]शिरः ॥ ११ ॥ इमं मा हिंसीरिति[5] पञ्चभिरुत्सर्गैरुपधानमानुपूर्वेणोपतिष्ठेत ॥ १२ ॥ यद्येकं स्यादनुपरिहारमुपदध्याल्लोकाश्चोपतिष्ठेतोत्सर्गैश्च ॥ १३ ॥ उत्तरमंसं स्वयमातृण्णायान्तरेण[6] संचरेदंसशिरांसि—त्वं यविष्ठेति[7] संवत्सरीं जपति[8] ॥ १४ ॥ सर्पशिर उत्तरस्मिन्नंस उपधाय नमो ऽस्तु सर्पेभ्य इति तिसृभिरनुदिशति ॥ १५ ॥ अपां त्वेमन्त्सादयामीति[9] पञ्चदश्यापस्याः पञ्च पञ्चाभित उपदधाति ॥ १६ ॥ छन्दस्याः पञ्चोत्तरतः ॥ १७ ॥ अयं पुरोभुवरिति[10] पञ्चाशतं प्राणभृतः पञ्चभिः पर्यायैर्दश दशैकेन ॥ १८ ॥ प्रथमं दशवर्गं पुरस्तादुपदधात्यथ द्वितीयं पश्चात्तृतीयं दक्षिणतश्चतुर्थमुत्तरतो मध्ये पञ्चमम् ॥ १९ ॥ आयुषे प्राणं संतताः प्राणापानौ सतन्विति पञ्चाशतं संयतो दशभिः पर्यायैः पञ्च पञ्चैकेन ॥ २० ॥ प्राची दिगित्येतिमात्रा यथा प्राणभृतः पञ्चाशतमुपधाय प्रतमुपदधाति ॥ २१ ॥

इति प्रथमे [ प्रथमे ऽध्याये ] सप्तम खण्डम् ॥

1 MS II. 7. 16.
2 MS II. 7. 17.
3 MS I. 3. 37: 43. 8
4 MS II [illegible] 3 108 11.
5 MS II 13 14: 163 7
6 ! Thus the ms first hand. The second hand °मातृण्णायामन्तरेण (to be read as °मन्तरे न ?).
7 MS II. 13 11 162. 1.
8 The ms संवत्सरी यजुरति. The entire sūtra is corrupt
9 MS II. 7. 15: 97 1.
10 MS II. 7. 18 103. 6.
11 MS II. 7. 19. 103. 15
12-12 The ms °त्यथ द्वितीयं तृतीयं पश्चाद् द्वितीयं दक्षिणत°. Cp II. 2. 1. 21.
13 MS II. 7. 20 104. 16.

सम्राच्च प्रचेताश्चाग्ने सोमस्य सूर्यस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उग्रा च भीमा च पितॄणां यमस्येन्द्रस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

प्राची च प्रतीची च वसूनां रुद्राणामादित्यानां ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

यन्त्री च यमनी च मित्रावरुणयोर्मित्रस्य धातुस्ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

ध्रुवा च पृथिवी च सवितुर्मरुतां वरुणस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

उर्वी चाधिपत्नी च बृहस्पतेर्विश्वेषां देवानां ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

इति वैश्वदेवीः[1] प्रथमा व्रतस्य ॥ १ ॥ प्राच्या त्वा दिशा सादयामीति पञ्चात्मेष्टका एकैकां लोकेषु ॥ २ ॥ इन्द्रो दधीचो अस्थभिरिति[2] दध्याथर्वशिरो नव पूर्वार्ध एकां मध्ये ॥ ३ ॥ तिस्रो गायत्रीः पुरस्तादायाहि सुषुमा हि ते इति ॥ ४ ॥ रथन्तरं द्वे द्वे तिस्रः कृत्वोपदधाति—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वावं अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥[4]

इति रथन्तरम् ॥ ५ ॥ द्वे द्वे चित्यामुपदधाति ॥ ६ ॥

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि नौ गार्हपत्यानि सन्तु तिग्मेन नस्तेजसा संशिशाधि ॥

इत्यृषभमुपधाय लोकंपृणया चितिं[5] संछादयति ॥ ७ ॥ चित्यां चित्यां हिरण्यशकलमप्यस्यति ॥ ८ ॥ अश्वं श्यावमालभते ॥ ९ ॥ पृष्ठो दिवीति[6] चात्वालात्पुरीषमतिहृत्य व्यूहति ॥ १० ॥ अग्निहोमचितिहोमान्जुहोति ॥ ११ ॥ अग्ने कृधोति[6] पञ्चाग्निहोमाः ॥ १२ ॥ या त इषुरिति[6] सर्वत्रानुषजेत् ॥ १३ ॥ तेषामेकैकेन चित्यां चित्यां जुहोति[7] ॥ १४ ॥ यो अप्स्वन्तरग्निरिति[8] पञ्च चितिहोमाः ॥ १५ ॥

1 The ms •देवी
2 MS II. 13 6 154 9
3 MS II 13 9.
4 Although derived from MS ib the two verses are here given sakalapāthena.
5 MS II. 13 11 161. 14.
6 MS II 13. 12
7 The ms adds चितिहोमान एव.
8 MS II. 13. 13 162. 10.

अग्ने देवं इहावह जज्ञानो वृक्तबर्हिषे ।
असि होता न ईड्यः ॥
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
[ चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ][3] ॥
[ मेधा]कारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम् ।
त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥
मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य आभर ॥

इति पञ्च[1] ॥ १६ ॥ तासामेकैकया[2] चितिं चितिमभिमृशत्यग्ने धामानीति च ॥ १७ ॥ प्रतप्रभृत्यभिमर्शनान्तं सर्वचितिषु ॥ १८ ॥ अनूपसदमग्निं चिन्वन्ति चिन्वन्ति ॥ १९ ॥

इति चयने [ प्रथमे ऽध्याये ] ऽष्टमं खण्डम् ॥

इति[4] प्रथमो ऽध्यायः ॥

---

1 Though read sakalapāthena the verse is from MS II 13, 5 154 1–2.

2 The ms तासामेकैकां.

3 MS II 13 11 162, 3

4 The ms adds चयने.

अश्वं श्वेतमालभ्याश्वतीरुपदधाति ॥ १ ॥ ध्रुवक्षितिरिति[1] पञ्चाश्विनीर्लोकेषु[2] ॥ २ ॥ उपधायर्तव्ये उपदधाति पञ्च पञ्चोत्तराः सजूर्ऋतुभिरिति[3] पर्यायैः ॥ ३ ॥ सजूर्ऋतुभिरिति[4] पुरस्तात्पर्यायाणामनुषजेत्सजूर्देवैर्वयुनाधैरित्युपरिष्टात् ॥ ४ ॥ प्राणं [मे] पाहीत्यूनस्थासु वायव्या अनूपदधीतापः पिन्वेति[5] वायव्यास्वपस्याः छन्दे वर्ते इत्यपस्यासुतपञ्चोद्यतस्रः पुरस्तादुपधायोत्तरैः पर्यायैः पञ्च पञ्चाभित उपदधाति[6] ॥ ५ ॥ व्याख्याताः सार्यचितिकाः ॥ ६ ॥ तृतीयामुपदधाति[7] ॥ ७ ॥ इन्द्राग्नी अव्यथमानामिति[8] स्वयमातृण्णामभिमन्त्र्य विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे[9] ॥ अन्तरिक्षं यच्छेति[10] सादयति ॥ ८ ॥ नात्राविद्वान्वरदानम्[11] ॥ ९ ॥ अन्तरिक्षमाक्रमिषमिति यजमानं वाचयति ॥ १० ॥ ज्योतिरसि ज्योतिर्मे यच्छेति[10] हिरण्येष्टकां राज्ञ्यसि प्राची दिगिति[11] पञ्च दिश्या लोकेषूपधाय रेतःसिचं रेतःसिचौ वा विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमिति[1] विश्वज्योतिषमपराजिता नामासीति[13] मण्डलां सादयति[14] ॥ ११ ॥ आयुर्मे पाहीति[8] दश पुरस्तादुपधायोत्तरैः पर्यायैर्द्वादश द्वादशाभित उपदधाति[15] ॥ १२ ॥ मूर्धासि राडिति[6] सप्त पुरस्ताद्यन्त्री राडिति[6] सप्त पश्चात् ॥ १३ ॥ समीचीरवदाया द्वेष्यस्य ॥ १४ ॥ व्याख्याताः सार्धचितिकाः ॥ १५ ॥ चतुर्थीमुपदधाति ॥ १६ ॥ आशुस्त्रिवृदिति[16] पुरस्ताद्व्योमा सप्तदश[17] इति दक्षिणतो भान्तः पञ्चदश इत्युत्तरतो धरुण एकविंशः

1 MS II 8 1

2 ? The ms लोकेषि.

3 The ms °र्म्ये

4 MS II, 8 2

5 ?

6 Based on MS III 2 9 29 11–13

7 The ms तृतीयानुस्वती first hand, तृतीया चितिं चिनोत्य् second hand

8 MS II 8 3

9 MS II 7 16 99 10.

10 MS II 7 15

11 The ms नात्र विद्वान्वरदान

13 MS II 8 9 113 5

13 MS II 8 14 117 9-

14 ? The ms मगलान्न्या.

15 From MS III 2 9 30 5

[illegible] MS II 8 4

17 The ms ध्वान्न

इति पश्चात्प्रवृत्तिरष्टादशो इति षोडश शेषेणोपधायर्तव्ये उपधायैकया स्तुवतेति[1] सप्तदश सृष्टीरुपधाय ऋतूनां पत्नीति[2] पञ्चदश व्युष्टीरुपदधाति ॥ १७ ॥ व्याख्याताः सार्वचितिकाः ॥ १८ ॥ पञ्चमीमुपदधाति ॥ १९ ॥ अग्ने जातानिति[3] पश्चाच्च[तुश्]त्वारिँशौ स्तोमैं इत्युत्तरतो ऽग्नेः पुरीषमिति[4] मध्ये ॥ २० ॥ चत्वारिँशतमेवश्छन्दं इति प्रथमं दशवर्गं पुरस्तादुपदधात्यथ[5] द्वितीयं पश्चात्तृतीयं[5] दक्षिणतश्चतुर्थमुत्तरतः ॥ २१ ॥ रश्मिना क्षयाय त्वा जिन्वेति[6] त्रयस्त्रिँशतं स्तोमभागाँ[7]श्चतुरः सप्त वर्गान्दक्षिणत उपधाय पञ्च लोकेषूपदधाति ॥ २२ ॥ राज्ञसि प्राची दिगिति[8] पञ्च नाकसदो लोकेषु ॥ २३ ॥ अयं पुरो हरिकेश[9] इति पञ्च चूडाः पञ्च नाकसत्स्वध्युपदधाति पश्चात्स्वार्ता[10]मुत्तमाम् ॥ २४ ॥ पुरोवातसनिरसीति[11] पञ्च वृष्टिसनयो लोकेषु संयान्यावुपधायाभ्या[12] च ध्रुवौ चेति[13] षोडश ॥ २५ ॥ येनै[14] ऋषयै इति त्रिभिरनुयाकैरेकान्नं[15]शतमस्तृतम् ॥ २६ ॥ तथो योनिरित्यष्टौ ऋचा त्वा छन्दसा सादयामीति[16] च ॥ २७ ॥ सूर्ते[17][ वो ] विश्ववेदसमिति[18] पञ्च ॥ २८ ॥ छन्दश्चितिमुपदधाति—अयमग्नि सहस्रिणं[19] इति तिस्रो गायत्रीः पुरस्तात् ॥ २९ ॥ तिस्रस्तिस्रो ऽभित उपदधाति । [त्रिष्टुब्भिर्] दक्षिणतः । जगतीभिः पश्चात् । अनुष्टुब्भिरुत्तरतः ॥ ३० ॥ पङ्क्तिभिः पुरस्तादुपदधाति । बृहतीभिर्दक्षिणतः । उष्णिग्भिः पश्चात् । ककुब्भिरुत्तरतः ॥ ३१ ॥

इति प्रथमे [ द्वितीये ऽध्याये ] प्रथमं खण्डम् ॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभगो भद्रो अध्वरः ।
भद्रा उत [ प्रशस्तयः ] ॥
[ भद्रा उत ] प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये ।

1 MS II, 8, 4.
2 MS II, 8 6: 110 6.
3 MS II, 13, 10 159, 14.
4 MS II 8, 7.
5-5 ? The ms °दधातीत्य द्वितीयं तृतीयं पश्चाद् द्वितीयं. Cp II 1, 7, 19
6 MS II, 8, 8, 112, 5
7 The ms °भागा° and वर्गा (for °भागान् and वर्गान्).
8 MS II, 8, 9, 113 5.
9 MS II, 8 10 114, 13.
10 The ms °द्यु° first hand, °ध्यु° second hand, Cp MS III, 3 1 33, 7.
11 The ms पुरस्ता°.
12 MS II 8 13.
13 The ms संयाज्या°.
14 The ms °धायांशावद्ध.
15 The ms रये ः न ष्पय. (for येना)
16 MS II, 12, 4, 147, 6
17 ?
18 MS II, 13, 2, 153 6.
19 MS II, 13 4, 153 13.
20 The ms first hand हुवें.
21 MS II, 13, 5, 153 17.
22 MS II, 13, 7 155 13.

येना समन्तु सास्रहि ॥

येना समन्तु सामह्यव स्थिरा तनुहि भूरि शर्धताम् ।

वनेमा ते अभिष्टिभि ॥

इति ॥ १ ॥ विराजः प्रेष्ठो अग्ने[1] ॥ इमो अग्ने इति ।

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती [ जनयन्त प्रशस्तम् ] ।

[ दूरे ] दृशं गृहपतिमथर्युम् ॥

इति ॥ २ ॥ अग्ने नयेति[3] दक्षिणतः । आभिर्[4] हो[नार मन्यं इत्य]तिच्छन्दसः पश्चात् ॥ ३ ॥ त्वं नो अग्ने[5] ॥ स त्वं नो अग्ने[5] ॥ तं त्वा शोचिष्ठ दीदिव[6] ॥ [अधा ह्य]ग्ने[7] ॥ एवा ह्यग्ने इति द्विपदा उत्तरतः ॥ ४ ॥ रेतःसिचमुपधाय परमेष्ठी त्वा सादयतु दिव पृष्ठे ज्योतिष्मतीमिति[8] विश्वज्योतिषम् ॥ ५ ॥ अधिर्यान्नामासीति[9] मण्डलाम् ॥ ६ ॥ ऋतव्ये उपधाय नर्मुपदधाति ॥ ७ ॥ यवा अयवा इति सप्त ॥ ८ ॥ पृथिव्यसि जन्मनेति[11] पञ्चभिरनुवाकैरेकोना सप्ततिः ॥ ९ ॥ या देव्यस्थेष्टक इति पुरस्तात्पर्यायाणामनुपजेदुपरिष्टादित्युपरिष्टात् ॥ १० ॥ ऋचे त्वा । रुचे त्वा । द्युते त्वा । भासे त्वा । ज्योतिषे त्वेति[12] पञ्चभिर्घृतपिण्डान् ॥ ११ ॥

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यत पौर्णमासी जिगाय ।

तस्यां देवाय संविशान्त उत्तमे नाक इह मादयन्ताम् ॥

इति पौर्णमासीम् ॥ १२ ॥ कृत्तिका नक्षत्रमिति[14] नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरूनाभि[15]शतम् । अग्ने रुच स्थेर्येनुपजेत् ॥ १३ ॥ पुरस्ताद्द्विर्यौक्तस्यामावास्या सुभगेत्यमावास्यामुपरिष्टाद्वर्णानां पौर्णमासीममावास्यां च ॥ १४ ॥ ऋषभमुपधाय लोकंपृणया चिति[16][17] संह्लादयति ॥ १५ ॥ स्वराभि स्वर्गे यन्हेति[18] हिरण्येष्टकाम् ॥ १६ ॥ परमेष्ठी त्वा सादयतु दिव पृष्ठे व्यचस्वतीमिति[17] स्वयमातृण्णामध्वर्युः प्रोथदश्व इति विकर्णीं[19] शर्करां प्रतिप्रस्थाता युगपदुपधत्तः ॥ १७ ॥ दिवमाक्रमियमिति यजमानं वाचयति ॥ १८ ॥ न स्वयमातृण्णामुपवपति ॥ १९ ॥ पुरीषप्रभृति समानम् ॥ २० ॥

1 MS II 10 6 139 5
2 MS IV 10 1 143 6
3 MS I 10. 3 144 3.
4 MS II 13 8
5 MS IV 10 4
6 MS I 5 3 69 10
7 MS II 7 16 99 12
8 MS II 8 14 117 12
9 ?
10 MS II 13. 12 162 6
11 MS II 13 15-19
12 These five formulas are derived from TS IV 4 6 2, for MS II 7 18 101 14 has only four
13 For corrections see TS III 5 1, 1.
14 MS II 13 20 165 13
15 The ms -ह्रैशं-
16 The ms चिनी or चिनी
17 MS II 7 15 98, 9
18 MS II 8, 14.
19 ? The ms -द्वाकंनो (for -द्वुक्वत ?)

जानुदघ्नं प्रथमं चिन्वानश्चिन्वीत नाभिदघ्नं द्वितीयं चुबुकदघ्नं तृतीयं ततो न ज्यायाँसम् ॥ २१ ॥ साहस्रं प्रथमं द्विसाहस्रं द्वितीयं त्रिसाहस्रं तृतीयम् ॥ २२ ॥ संचितँ सहस्रेण हिरण्यशकलैः प्रोक्षति पञ्चधा विभज्य—सहस्रस्य प्रमासीति[1] पर्यायैः ॥ २३ ॥ साहस्रो ऽसि सहस्राय त्वेत्यैनुपजेत् ॥ २४ ॥

इति चयने [ द्वितीये ऽध्याये ] द्वितीयः खण्डः ॥

वसवस्त्वा रुद्रैः पश्चात्पान्त्विति घृतेन प्रोक्षति पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नुत्तरैः पर्यायैरनुक्रामन् ॥ १ ॥

नितानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु ॥
आदित्यास्त्वा पुरस्ताद्विश्वैर्देवैः पान्तु ॥
पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्तु ॥
देवेन्द्रस्त्वेन्द्रज्येष्ठा वरुणराजानो ऽधस्ताच्चोपरिष्टाच्च पान्तु ॥

इति मध्ये ॥ २ ॥ इमा मे अग्न इष्टका धेनवः सन्त्वित्यभिमन्त्र्य शतरुद्रियं जुहोत्यर्कपर्णेनाजक्षीरेण गावीधुकासक्तून्कृत्वा षड्धा विभज्योत्तरापरस्यामिष्टकायामुदङ् निष्क्रम्यात्याग्नीध्रमग्निं नमस्ते रुद्र मन्यव इति प्रभृतिना नमः सेनाभ्यः सेनानीभ्यश्च वो नम इत्यन्तेन जानुदघ्ने ॥ ३ ॥ नमो रथिभ्य इतिप्रभृतिना नमो मेघ्याय च विद्युत्याय चेत्यन्तेन नाभिदघ्ने ॥ ४ ॥ नमो वर्ष्याय चावर्ष्याय चेति[10] प्रभृतिना प्रत्यवरोहेभ्यस्तृतीयमास्यदघ्ने ॥ ५ ॥ नमो अस्तु रुद्रेभ्यो ये दिवीति[11] त्रीन्प्रत्यवरोहान् ॥ ६ ॥ आस्यदघ्नादीन्यजमानँ वाचयन्तेषु देशेषु जुहोति ॥ ७ ॥ असंचरे ऽर्कपर्णं न्यस्यति । यं द्विष्यात्तस्य पशूनां संचरे न्यस्येदिति[12] ब्राह्मणव्याख्यातम् ॥ ८ ॥ गावीधुकं चरुं पयसि श्रृतमुपदधाति तस्यामेवेष्टकायाम्

यो रुद्रो ऽप्सु यो ऽग्नौ य ओषधीषु ।
यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो ऽस्तु देवाय ॥

इति ॥ ९ ॥ तिसृधन्वमयाचितो[13] ब्राह्मणाय ददाति ॥ १० ॥ अश्मन्नूर्जमित्युदकुम्भेनाग्निं त्रिः परिषिच्य त्रिः प्रतिपर्येति ॥ ११ ॥ यद्यभिचरेदेतदेव यजु-

1 Nearly identical with MS III 3 2 34 6 sqq
2 MS II. 8 14.
3 ! The ms युंजान॰.
4 MS II 8 14 118 14
5 The ms first hand गवेधु॰.
6 उदङ् is omitted by the first hand.
7 !
8–8 MS II. 9. 2–4 120, 16–124, 1.
9–9 MS II. 9. 4–7 124, 1–125, 13
10 MS II. 9 7–9. 125. 13–129. 8.
11 MS II. 9. 9 129. 9.
12 MS III. 3. 4 37. 9.
13 ! Thus the second hand The original must have been different as the first hand reads त्रीनिपर्वंतधान्यचितो.
14 MS II. 10. 1: 131. 1.

रिति[1] ब्राह्मणव्याख्यातम् ॥ १२ ॥ आग्नेयपावमान्यां गायत्रं[2] गायति शिरसि रथन्तरं दक्षिणेऽस्मिन्पक्षे । बृहदुत्तरस्मिन् । वामदेव्यं दक्षिणस्यां श्रोण्याम् । पुच्छे यज्ञायज्ञियम् । प्रजापतेर्हृदयमनृचमपिपक्षे ॥ १३ ॥ अर्क्यैः सामभिरर्कं परिष्टुवन्ति[3] ॥ १४ ॥ स्तुतं होतानुशंसति ॥ १५ ॥ इष्टो यज्ञो भृगुभिरित्याग्निकं[4] समिष्टयजुर्यजमानं वाचयति ॥ १६ ॥ अवकां वेतसशाखां मण्डूकमिति वंशे प्रबध्य समुद्रस्य त्वावकयेति[5] सप्तभिरग्निं परिकर्षति ॥ १७ ॥ प्राणो माण्डूके[6] ॥ १८ ॥ विकर्षणं संलुप्योत्करे न्यस्यति ॥ १९ ॥ कृष्णाजिनस्योपानहौ प्रतिमुच्य नमस्ते हरसे इत्यारोहति ॥ २० ॥ पञ्चगृहीत आज्ये पञ्च हिरण्यशकलान्प्रास्य[7] स्वयमातृण्णां पञ्च कृत्वो ऽक्ष्णया व्याघारयति—द्रुपदे वडिति पर्यायैः ॥ २१ ॥ द्वाभ्यामुत्तमे मध्ये ॥ २२ ॥ दध्ना मधुमिश्रेणाग्निं व्योक्षति—अग्रपते इति दर्भमुष्टिना ॥ २३ ॥ प्राणदो इत्यवरोहति ॥ २४ ॥ व्यवोक्षणान्तं कृत्वोपस्थाने[8] प्रवर्ग्यानुवाक्येन गणेन पश्चार्धे चतुर्थमीदृङ् चेति[9] पञ्चमीमीदृक्षास इति षष्ठीमिन्द्रं दैवीर्विशो इति सप्तमीम् ॥ २५ ॥ यदि कामयेत विशा क्षत्रं हन्यामिति[10] ब्राह्मणव्याख्यातम् ॥ २६ ॥

इति चयने [ द्वितीये ऽध्याये ] तृतीय खण्डम् ॥

वसोर्धारां जुहोति ॥ १ ॥ समुद्रादूर्मिरिति[11] सूक्तेन घृतमभिमन्त्र्यौदुम्बर्या महत्या स्रुचा पश्चाच्चमसः स्रुक्पात्रेण संछादितस्यै[12] मृत्रावहितायामाधं चमस आसिञ्चति[13] ॥ २ ॥ वैश्वानरीये धारां पातयत्यग्नाविष्णू सजोषसेति[14] जपित्वाविच्छिन्नाम् ॥ ३ ॥ वाजश्च म इति पञ्चानुवाकान्यजमानं वाचयति ॥ ४ ॥ एका च तिस्रश्च त्रयस्त्रिंशतश्चतस्रश्चाष्टौ चेति[15] चतुरभ्यासेनाष्टाचत्वारिंशतः[16] । वेनुधानदूर्षार्धेर्युक्त्वायुर्यज्ञेन कल्पेतें[17] इति प्रभृतिना स्वर्मूर्धा स्वाहा वैयशान. स्वाहा व्यशनान्त्यः[18] स्वाहान्त्यो भौवन. स्वाहा भुवनस्य पतये ऽधिपतये स्वाहेति[19] स्वर्देवा अगामामृता अभूम प्रजापते. प्रजा

1 MS III 3 3 37 17
2 The ms गायत्र्या
3 Identical with MS III 3 5 38 11
4 MS II. 12 3 147 3.
5 MS II 10 1
6 The sūtra is not complete
7 The ms प्रश (for प्रास्य).
8 Here something seems to be missing
9 MS II 11 1.
10 MS III 3. 10 44 4
11 MS I 6. 2 87 13
12 The ms ॰तस्या.
13 The sense of the sūtra is not clear.
14 MS IV. 10. 1 142 3.
15 MS II 11 2-6.
16 ? The ms तिसश्चेत्य यजुरानयव॰.
17 MS II 11. 6 143 14, 17.
18 MS I. 11. 3 163. 13
19 MS I. 11 3 व्यशनान्त्यः
20 MS ib

अभूम स्वाहेत्यन्तेन धारा ॥ ५ ॥ अग्नौ स्रुचमनुप्रहरति ॥ ६ ॥ यदाज्यमुच्छिष्यते तस्मिँश्चतुःशरावमोदनं पक्त्वा मध्यतःकारिभ्यो ददाति चतस्रश्च धेनूः ॥ ७ ॥ वाजप्रसव्यं जुहोति—वाजाय स्वाहेति[1] त्रयोदशाहुतीः[2] ॥ ८ ॥ सर्वाणि ग्राम्यारण्यान्याज्येनै[3] प्रयुत्यौदुम्बरेण स्रुवेण जुहोति—अग्ने अच्छा वदेह न इत्यष्टौ[5] विश्वे नो थथेति षट् ॥ ९ ॥ हुत्वा हुत्वा पात्र्याँ संपातानवनयत्यभिषेकाय ॥ १० ॥ अग्रेणाग्निमभिषिञ्चत्यासन्द्यां कृष्णाजिने ब्रह्मवर्चसकामं बस्ताजिने पशुकामम् ॥ ११ ॥ देवस्य त्वेति बृहस्पतिमिति ब्राह्मणमिन्द्रमिति राजन्यं भवमिति वैश्यम् ॥ १२ ॥ द्वादशगृहीतेन राष्ट्रभृतो जुहोति—ऋताषाडिति[6] षड्भिः पर्यायैर्[7] पर्यायेण। स न इदं ब्रह्म क्षत्रं पात्विरित्यनुपजेत् ॥ १३ ॥ भमृदयं इति राजन्यस्योत्तमां कुर्यात्प्रजापतिः परमेष्ठीति[8] वैश्यस्य ॥ १४ ॥ स नो भुवनस्य पते इति रथमुखे दश ॥ १५ ॥ प्रक्षालितशिरसँ रथमध्यग्नि धारयन्ति ॥ १६ ॥ प्रत्यङ्मुखे प्रथमं द्वे द्वे विश्वनुपरिहारं पश्चात्प्राङ्मुखे द्वितीयम् ॥ १७ ॥ ततो ब्रुत्याध्वर्योरावसथँ हरन्ति ॥ १८ ॥ तं दक्षिणायाः काले यजमानोऽनुदिशति ॥ १९ ॥ नीग्न्यातहोमानञ्जलिना परिग्राहं[10] जुहोति—समुद्रो ऽसि नभस्वानिति[11] पर्यायैः ॥ २० ॥ पृष्ठ्यावर्हिः[9] प्रभृति समानमा धिष्ण्यानिर्वपति[12] ॥ २१ ॥ उपेष्विष्टका दधाति वैद्वीरीर्धतयन् ॥ २२ ॥ अश्मनवमीं आग्नीध्र एकविँशतिँ[14] होत्रिय एकादश ब्राह्मणाच्छँस्ये पत्नीमार्जालीये ऽष्टाष्टावितरेषु ॥ २३ ॥ अग्नीषोमीयस्य पशुपुरोडाशमनये गृहपतये इत्यष्टौ देवसूवाँ हवीँष्यनुनिर्वपति सर्वपृष्ठ्यां चाग्नये गायत्रायेति[15] दशहविषम् ॥ २४ ॥

इति चयने [ द्वितीये ऽध्याये ] चतुर्थं खण्डम् ॥

श्वो भूते परिधीन्परिधायाग्निं[16] युनज्मीति[16] दक्षिणं पक्षमभिमृशतीमौ ते पक्षाविति युत्तरमिन्दुर्दक्ष[17] इत्यात्मानम् ॥ १ ॥ एकयूप एकादशिनानुपाकरोति यथे-

1 MS I. 11. 3.

2 Based on MS I. 11. 8 169, 20, III. 4. 2. 46, 19.

3 ! The ms सर्वानानिम्यान्यारण्यानित्याज्येन first hand, सर्वानग्रामारण्यानित्याज्येन second hand. Cp MS III 4. 3 47. 6.

4 ! The ms प्रसवहोड॰ first hand, प्रसहोड॰ second hand.

5 MS I 11. 4: 164. 6–165. 6.

6 MS II. 12 1· 144. 4–15.

7 ! The ms अभेणर्दो॰ first hand

8 MS II. 12. 2.

9 The ms second hand ॰र्हि.

10 The ms परिमाहन्वार्त.

11 MS II. 12. 3· 145. 14

12 ! The ms first hand ॰वैप॰, second hand worthless.

13 The ms first hand उपद॰ (for द॰).

14-14 ! The ms ॰रार्वतनस्य नवमा.

15 MS II. 6. 13 72. 8.

16 MS III. 5. 10 180. 7.

17 MS II. 12. 3.

18 The ms एके यूप एका॰.

काहो भवति ॥ २ ॥ हिरण्यस्थालँ शतमानस्य मधुनः पूर्णं दक्षिणाभिः सह्वा-तिर्हरन्ति मन्त्रवर्गम् ॥ ३ ॥ चित्रं देवानामिति यजमानो ऽवेक्ष्याश्वेनावघ्राप्य[2] ब्राह्मणाय ददाति ॥ ४ ॥ पुरस्तादक्षायक्षियस्य दिवो मूर्धासीत्यप्सुमतीभ्या-मग्निँ संस्पृशति[4] ॥ ५ ॥

इमँ स्तनं मधुमन्तं धयापां प्रपीनमग्ने सलिलस्य[5] मध्ये ।

उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रियँ सदनमाविवेश[6] स्वाहा ॥

इति परिधिविमोकमभिजुहोति । वि ते मुञ्चामीति[7] च ॥ ६ ॥ समारो-पयन्त्वास्ते अग्ने[8] ॥ या वो देवा[9] ॥ रुचं नो धेहि[10] ॥ तस्वायामीत्याहुतीर्जुहोति समीची नामासीसि[10] द्वे[11] मधुध्वे ॥ स्वयं कृण्वान इति पञ्चभिराज्यँ हिरण्यगर्भ[14] इत्यष्टौ हुत्वा प्रत्यवरोहति—

पुनर्मनः पुनरायुर्न आगात्पुनः प्राणः पुनराकूतमागात् ।

पुनश्चक्षुः पुनः श्रोत्रं म आगात् ॥

वैश्वानरो ऽदब्धस्तनूपा अपबाधतां दुरितानि विश्वा ।

उरुशँस मा न आयुः प्र मोषीः[15] ॥

इति ॥ ७ ॥ दीक्षया त्वापं तपसा त्वापं सत्यया त्वापं श्रद्धया त्वापमवभृथेन त्वापमिति यजमानो ऽग्निमुपतिष्ठते ॥ ८ ॥ अग्निं चित्वा न रामामुपेयाद् द्वितीयं चित्वा नान्यस्य भार्यां तृतीयं चित्वा न कांचन ॥ ९ ॥ यद्युपेयान्मैत्रावरुण्यामिक्षया यजेत ॥ १० ॥ अग्निं चित्वा मैत्रावरुण्यामिक्षया यजेत सौत्रामण्या वा ॥ ११ ॥ अग्निचिद्वसोरत्नीभया[16] तं पापं कीर्तयेन्न कंचन प्रत्यवरोहेत् ॥ १२ ॥ संवत्सरं न वर्षति धावेद्यावज्जीवँ यो[17] ॥ १३ ॥

ये ऽग्नय. पुरीषिण आविष्टा पृथिवीमनु ।

तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥

1 The ms दक्षिणातिसधातिह॰.

2 The ms ॰श्वेनोपस्याप्य.

3 MS II. 12 3 146, 15

4 The ms ॰मीढुष्ट॰ first hand, ॰मिम-भिमृ॰ second hand

5 The ms second hand सरिरस्य.

6 The ms second hand ॰विशस्व.

7 MS I, 4 1 48 2

8 MS II. 7, 16.

9 MS III, 4 8.

10 MS II. 13 21 166, 13.

11 The ms द्वी.

12 MS II 8 12 116, 3.

13 MS II 13 22 167 14

14 MS II 13, 23 168, 5.

15 Excepting the second line the rest is MS I, 2 3: 12, 5, 6, III, 4 8 56 8

16 The passage is entirely damaged. The last words may be नास्य पापं कीर्तयेत् Cp KS XIX 10 12, 8

17 ! The ms first hand यावज्यै वा. The second hand strikes off these two words.

इति प्रोष्य स्वाग्निमुपतिष्ठते[1]—उप त्वाग्ने दिवे दिवे[2] इति तृचेनान्येषाम् ॥ १४ ॥ यदि चित्वा प्रयायाद्यमनन्तरं सोममाहरेत्तस्मिन्पुनश्चितिमुपदधाति ॥ १५ ॥ अष्टौ नानामन्त्राः ॥ १६ ॥ संस्थितयोः पूर्वाह्णिक्योः प्रवर्ग्योपसदोर्ये[ना ऋषय ][4] इत्यष्टावुपदधात्यष्टौ च लोकंपृणाः ॥ १७ ॥ पृष्ठो दिवीति[5] चात्वालात्पुरीषमतिहृत्य व्यूहति ॥ १८ ॥ समानमन्यत् ॥ १९ ॥ प्रथमं चिन्वानो मध्यमायां चितावुपदधाति स्तोमा नानामन्त्राः प्राग्लोकंपृणायाः ॥ २० ॥ द्वितीयं चिन्वान उत्तमायां प्राग्लोकंपृणायाः ॥ २१ ॥ यद्यग्निचिदनग्निचित्स्यं सोममाहरेदकार्षि[7] शतिमुपदधीताष्टौ नानामन्त्रास्त्रयोदश च लोकंपृणाः ॥ २२ ॥ अयं ते योनिर्ऋत्वियः इत्यग्निं[8] संस्पृशति ॥ २३ ॥ यदि त्वापश्चितमाहरेत्संवत्सरं दीक्षितो भवति संवत्सरमुपसदश्चरति ॥ २४ ॥ पुरस्तादुपसदामाग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालम् ॥ २५ ॥ दाशतयैस्त्वाग्नेयैः सूक्तैः प्रतिसूक्तमिष्टका उपदधाति ॥ २६ ॥ अभिजिद्विश्वजिता संस्था ब्राह्मणव्याख्याता ब्राह्मणव्याख्याता ॥ २७ ॥

इति चयने [ द्वितीये ऽध्याये ] पञ्चम खण्डम् ॥

इति[9] द्वितीयो ऽध्यायः

---

1 Prof. Caland suggests स्वमग्निमु°. Cp KS XXII. 10 67. 3.

2 MS I 5. 3 69. 3

3 ? The ms सोममामरश्चिन्

4 ? MS II. 12. 4 147. 6

5 MS II 13 11 161. 14.

6 MS I 5 1 66 4.

7 Here something seems to be missing. Cp KS XXII. 3 58. 22 sqq. TS V 6 5 1

8 We have not been able to trace the passage alluded to in MS.

9 The ms adds चयने.

ब्राह्मणो राजन्यो वा शरदि वाजपेयेन यजेत ॥ १ ॥ षोडशिकी रा[ज]-
क्रयणी ॥ २ ॥ सप्तदश दीक्षास्तिस्र उपसदः ॥ ३ ॥ कृते वरे[1] दक्षिणस्य हविर्धा-
नस्य पश्चाद्ग्रहानुपयामेभ्यः खरं करोति ॥ ४ ॥ हविर्धानगते सोमे सुरां द्रोणं
थालमित्यपरेण द्वारेण प्रपादयति ॥ ५ ॥ प्रतिप्रस्थातुः सुरायाः[2] कर्म ॥ ६ ॥
खादिरश्चतुरस्रो यूपः सप्तदशारत्निः ॥ ७ ॥ गोधूमपिष्टानां चषालं समं यूपाग्रेण
॥ ८ ॥ रशनास्थाने सप्तदशभिर्वंशाभिर्वेष्टयति ॥ ९ ॥ श्वो भूते वाजपेयसंस्था
॥ १० ॥ देव सवितरिति[3] सप्तस्रुक्षु जुहोति ॥ ११ ॥ हिरण्यस्रज ऋत्विजः सोमैः
प्रचरन्ति ॥ १२ ॥ आग्रयणस्थालीं प्रयुज्य पञ्च खादिराणि वायव्यानि पात्राणि
प्रयुनक्ति ॥ १३ ॥ षोडशिपात्रं प्रयुज्य सप्तदश खादिराणि वायव्यानि सप्तदश
मार्त्तिकानुपयामान् ॥ १४ ॥ अतिपात्यमाने द्रोणे[4] वालं वितत्य सुरामतिपाव-
यति—पुनातु ते परिस्रुतमिति[5] ॥ १५ ॥ आग्रायणं गृहीत्वा पञ्चैन्द्रानतिग्राह्यान्गृ-
ह्णाति—उपयामगृहीतो ऽसि नृषदं त्वेति[6] पर्यायैः कुविदङ्गेति सप्तदश प्राजापत्यानथा निष्ठेति[7]
सप्तदश सुरा[ग्रहान्] ॥ १६ ॥ पूर्वो ऽध्वर्युर्गृह्णाति ॥ १७ ॥ पुरो ऽक्षमध्वर्युः सो-
मग्रहान्सादयति पश्चादक्षं[8] प्रतिप्रस्थाता सुरोपयामान् ॥ १८ ॥ व्यत्यासं गृहीतः
॥ १९ ॥ पशूनुपाकरोत्याग्नेयमजमै[न्द्राग्नमजमै]न्द्रं वृष्णिं सारस्वतीं मेषीं* सा-
रस्वतं मेषं मारुतीं पृश्निं वशां सप्तदश प्राजापत्यान्श्यामांस्तूपराननेकरूपा-
न्सारस्वतीं मेषीमपन्नदतीम् ॥ २० ॥ पर्यग्निकृतानामाग्नेयप्रभृतीनां चतुर्णां*
वपाभिः प्रचरन्तीतरान्परिश्रा[प]यन्ति ॥ २१ ॥ माध्यन्दिनीयान्सवनीयाननु

1 ! To be emended to खरे ?

2 The ms सुरायां.

3 MS I, 11 1 161, 7.

4 ! The ms °माने द्रोण first hand, °मणे द्रोणं second hand

5 MS II, 3 8 35 17

6 MS I 11, 4.

7 The ms सुरा.

8 Sûtras 17 and 18 are only tentatively put above. The ms first hand पर्योऽध्वर्युः सानुगृह्णीतो सुरोपयामे ऽध्वर्यु समग्रहं सादयत्यक्ष°. The second hand is worthless.

नैवार चरुं निर्वपति बार्हस्पत्यँ सप्तदशशरावम् ॥ २२ ॥ औदुम्बर्या स्रुचा त्रियं· स्रुपा तूष्णीं चतुर्थं पयसि शृतं पात्र्यामुद्धृत्य चात्वाले ऽवदधाति ॥ २३ ॥ दक्षिणाकाले दक्षिणतः पुरस्तात्प्राग्वंशस्य वाजस्य नु प्रसवे इति रथमुपावहरति ॥ २४ ॥ अप्स्वन्तरमृतमित्यश्वान्स्नपयन्ति[1] ॥ २५ ॥ वायुर्वा त्वेति[1] युनक्ति[2] ॥ २६ ॥ अपां नपादाशुहेमन्निति[1] रराटानि प्रतिमार्ष्टि[3] ॥ २७ ॥ अप्रियाहिनँ रथँ युञ्जन्ति तूष्णीँ[4] षोडशेतरान् ॥ २८ ॥ सप्तदश ददाति सप्तदश हस्तिनः सप्तदश दासी- र्निष्ककण्ठीः सप्तदश गवां शतानि[1] दश सप्तदशानि प्रकृतीनाँ युक्तं दक्षिणानाम् ॥ २९ ॥ रथाँस्तीर्यान्ते[5] ऽश्वस्थापयन्ति ॥ ३० ॥ माहेन्द्रकाले वेदिश्रक्तिषु दुन्दु- भीनिघ्नन्ति ॥ ३१ ॥ रथाक्षं चात्वाले निघ्नन्ति ॥ ३२ ॥ तस्मिन्प्रथचक्रं मुञ्चत्यौ- दुम्बरँ सप्तदशारम् ॥ ३३ ॥ सप्तदशोपपुटानश्वत्थपर्णेषूपनद्धाँश्चतुरश्चतुरः पञ्चै- कस्मिन् ॥ ३४ ॥ उत्तरतः पुरस्तात्सप्तदशस्स्यपुटेष्वौदुम्बरीं काष्ठां निघ्नन्ति ॥ ३५ ॥ प्रस्तुते[7] माहेन्द्रस्य स्तोत्रे देवस्य सवितुरिति[8] ब्रह्मा रथचक्रँ सर्पति ॥ ३६ ॥ आवह्य वाजसाम गायति ॥ ३७ ॥ चक्रमावेष्टयति ॥ ३८ ॥ विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि विष्णोर्विक्रमणमसीति पर्यायैर्यजमानस्त्रीन्क्रमान्क्रमते रथाय प्रजन् ॥ ३९ ॥ देवस्य वयमिति[9] यजुर्युक्तमारोहति ॥ ४० ॥ अभिरेकाक्षरामित्युज्जितीर्यजमानँ वाचयति ॥ ४१ ॥ वाजिनो वाजजिताविति[10] युग्यौ[11] नैवारमवघ्रापयति ॥ ४२ ॥ उत्तरेण पर्यायैर्प्रप्रोथेषु लेपान्निमार्ष्टि ॥ ४३ ॥ अवरोहति यजमानः ॥ ४४ ॥ राजमन्यः पुत्रः प्रतिहित आजिं धावति ॥ ४५ ॥

इति वाजपेये [ प्रथमे ऽध्याये ] प्रथमं खण्डम् ॥

अह्नो न्यह्नावभितो रथँ ये ध्वान्ता वाता अग्निमभि ये संपतन्ति ।
दूरेहेतिः पतत्री वाजिनीवाँस्ते नो ऽग्नयः पप्रयः पारयन्तु ॥

इति चक्रमभिमन्त्रयते ॥ १ ॥ अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्समत्सु वोदयेति कशामादायाश्वोऽसि हयोऽसि सप्तिरसीत्यश्वान्संक्षिपति ॥ २ ॥ विश इतरः प्रेष्टामा·

1 MS I. 11. 1.
2 Identical with MS I 11. 6. 168, 3–6
3 ! The ms हादशानि.
4 The last five words do not yield any sense.
5 ! The ms रथाँस्तीर्त्वा.
6 The ms महेन्द्र०.
7 ! The ms प्रश्नते.
8 MS I. 11. 7. 168 11, 15.
9 The ms वेज० first hand, वाजि० second hand.
10 MS I 11 10 171, 14
11 MS I 11 3 163 11
12 The ms युग्ये.
13 MS ib 12.
14 The ms first hand लेपर्न निमा०.
15 MS III, 12, 4: 161, 10.

रोहन्ति ॥ ३ ॥ तैः सहाजिं धावति ॥ ४ ॥ वाजं वाजिनो जयतेति[1] यजुषा ॥ ५ ॥ चतसृभिर्धावति ॥ ६ ॥ रथा आवर्तन्ते[3] । प्रदक्षिणं काष्ठां कृत्वायन्ति[4] ॥ ७ ॥ आ मा वाजस्येत्येतया[ग]तेषु जुहोति ॥ ८ ॥ प्रतिरथं कृष्णलान्याहरन्ति ॥ ९ ॥ हिरण्यस्थालँ[6] शतमानस्य मधुनः पूर्णं ब्रह्मणे ॥ १० ॥ इन्द्राय वाचं वदतेति[5] दुन्दुभीनाघ्नन्ति ॥ ११ ॥ इयँ व सा मत्येतीन्द्राय वाचँ विमुच्यध्वमिति[5] रथविमोचनीयं जुहोति ॥ १२ ॥ तेन धर्मेण युग्यौ नैवारमवघ्रापयति ॥ १३ ॥ दर्भमयँ वासः पत्नी परिधत्ते तार्प्यँ[7] यजमानः क्षौमँ यूपे सर्पिषि वा पर्यस्तम् ॥ १४ ॥ स्वो रोहावेति[5] यजमानः पत्नीमामन्त्रयत एहीति[5] पत्नी तैरेतेन धर्मेण ॥ १५ ॥ अहं नावुभयो रोक्ष्यामीत्युक्त्वायुर्यज्ञेन कल्पतें इति यजमानो यूपमारोहति ॥ १६ ॥ प्रजाय त्वा वाजाय त्वेति[5] विश ऊषपुटैर्यजमानमर्पयन्ति पुरस्तात्प्रत्यङ्क्वम् ॥ १७ ॥ यो यः पर्येति तं तमभिपर्यावर्तेत ॥ १८ ॥ स्वर्देवाँ अगामेत्यूर्ध्वाऽभ्यावधिस्त्रिनयति[8] ॥ १९ ॥ अग्ने अच्छा वदेह नैं इति सप्तभिरन्नहोमाञ्जुहोति ॥ २० ॥ अग्नये एकाक्षराय छन्दसे स्वाहेत्येनुवाकशेषेण यजमानमवरोहयति ॥ २१ ॥ इय ते[12] राडिमन्त्रस्य यन्तासि यमनो धर्तासि धरुणो रय्यै पोषाय कृष्यै क्षेमायेत्यवरोहन्तमनुमन्त्रयते ॥ २२ ॥ कृष्णाजिनमासन्धामास्तृणाति वस्ताजिने रुक्मँ शतमानम्[13] । तेजो ऽसीति रुक्मे पादमादधाति पुष्टिरसि प्रजननमसीति वस्ताजिने ॥ २३ ॥ दिवं प्रोष्ठनीमारोह तामःरुध प्रपश्यैकराण्मनुष्याणामित्यवरोहन्तमनुमन्त्रयते ॥ २४ ॥ तेन धर्मेण परिशिनष्टि ॥ २५ ॥ अत्रैवास्य श्वेतं छत्रं धारयन्त्याजिशिरेण यो ॥ २६ ॥ परिधानीयाँ संपाद्य माहेन्द्रेण प्रचरन्त्यैन्द्रेश्चातिग्राह्यैः ॥ २७ ॥ उपाकृते ब्रह्मसाम्नि सरस्वतीप्रभृतीनाँ वपाः सँस्कुर्वन्ति ॥ २८ ॥ प्राजापत्यशेषेणाभिघारयति ॥ २९ ॥ ब्राह्मणाच्छंसिचमसैः प्रचर्य सहप्राजापत्यमपन्नवत्या वपया प्रचर्य नैवारेण प्रचर्य पशुपुरोडाशैः प्रचरति ॥ ३० ॥ सहस्विष्टकृदिडं नैवारस्य पशुपुरोडाशानां च ॥ ३१ ॥ पशुकाल इतरैः पशुभिः प्रचरति ॥ ३२ ॥ वनस्पतिस्विष्टकृदिडमिति[15] परिश्र[य]न्ति ॥ ३३ ॥ पोतृधिष्ण्यमसैः प्रचर्य होतृचमसमुख्यान्वाजपेयचमसाननुन्नयति ॥ ३४ ॥ स्तुत-

1 MS I. 11. 2 162 8.

2 Ib 10 sqq

3 ! The ms स्वामावर्तते.

4 ! The ms काष्ठान्कृत्वायन्यू.

5 MS I. 11. 3.

6 The ms रथलँ first hand, रथालँ second hand, But cp MS I 11 7 169. 12.

7 ! The ms ताप्यमयँ.

8-8 ! The ms •पर्यावर्जयेयु. देवाः.

9 Hopelessly corrupt.

10 MS I 11 4 164. 6

11 MS I. 11 10 173. 2.

12-12 ! The ms •शेषेणऽयमवरोहयति यजमानो यं ते.

13 ! The ms first hand शतमानस्याराद्दं.

14 !

15 The ms •दिडामिति.

शस्त्रवन्तः ॥ ३५ ॥ संपृचः स्थ सं मा भद्रेण पृङ्क्तेति प्राङध्वर्युः सोमग्रहैरुद्द्रवति । विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रत्यङ् प्रतिप्रस्थाता सुराग्रहैः ॥ ३६ ॥ पश्चाद्धविर्धानस्य निदधाति ॥ ३७ ॥ ग्रहचमसैः प्रचरन्ति ॥ ३८ ॥ [उ]पोयच्छन्ति सुरोपयामान् ॥ ३९ ॥ भक्षयन्ति चमसान् ॥ ४० ॥ उपरि स्थापयन्ति ग्रहान् ॥ ४१ ॥ सारस्वतप्रभृतिभिर्मूर्ध्नि प्रचरन्ति ॥ ४२ ॥ सहास्विष्टकृदिडं पूर्वेषां च ॥ ४३ ॥ उपहूतायामिडायाँ वशायां यान्यवदानीयान्यङ्गानि तान्यृत्विग्भ्यो हरन्ति सोमग्रहाँश्चै यान्यनवदानीयानि तान्याजिसृग्भ्यः सुरो[पयामाँश्च] पर्याका-अनीनां प्रतिहितः प्रस्तन्तिँ ॥ ४४ ॥ न वाजपेययाजी कंचन प्रत्यवरोहेन्न प्रत्युत्तिष्ठेत् ॥ ४५ ॥ यदि प्रत्यवरोहेत्प्रत्युत्तिष्ठेद्वा बृहस्पतिसवेन यजेतेन्द्रसवेन राजन्यः ॥ ४६ ॥ सम्राडित्येनमाचक्षीरन् ॥ ४७ ॥

इति वाजपेये [ प्रथमे ऽध्याये ] द्वितीयं खण्डम् ॥

इति[4] प्रथमो ऽध्यायः ॥



1 The ms ॰र्गा.

2 The ms ग्रहसोमाँश्च

3 Hopelessly corrupt.

4 The ms adds वाजपेये

इष्टिप्रथमयज्ञानां द्वादशाहे ऽहीनस्यापि वा सत्रे गृहपतिरेवेष्टिप्रथमयज्ञः
॥ १ ॥ ब्राह्मणानाँ सप्तदशानाँ सप्तामेको गृहपतिः षोडश ऋत्विजो यजमानो-
ऽैव कएर्यांश्च ॥ २ ॥ एकप्रभृतीनां त्रैय सँसृतोऽहिनोदंकितोँ याजयन्ति ॥ ३ ॥
अर्थं हि तेनैं ॥ ४ ॥ सार्धिशाणि होप्यन्तो[4] गृहपतेरग्निष्वग्नीन्संनियपन्ते ब्रह्मा
होताध्वर्युरुद्गाता तत्पुरुषाश्चैतेनानुपूर्वेण ॥ ५ ॥ भवतं नः समनसाविति[5] जपति
यो निवपति येन येनार्थं हुत्वाधिनियपन्ते[6] ॥ ६ ॥ पञ्चपञ्चानाँ यक्ष्यमाणानामेको
ऽग्निः[10] ॥ ७ ॥ तैर्भिरिप्तौ विनिवपन्ते ॥ ८ ॥ दीक्षिष्यमाणाः [सं]निवपन्ते ॥ ९ ॥
चैत्रपक्षस्य सप्तम्यां दीक्षन्ते ॥ १० ॥ द्वादश दीक्षा द्वादशोपसदो ऽमावास्याँ यज-
नीये ऽहनि वा[12] ॥ ११ ॥ गृहपतिमुख्यान्मध्यतःकारिणो ऽध्वर्युर्दीक्षयते प्रति-
प्रस्थाता पत्नीः ॥ १२ ॥ अध्वर्युमुख्यानार्धिनः प्रतिप्रस्थाता नेष्टाः पत्नीः ॥ १३ ॥
प्रतिप्रस्थातृमुख्यान्तृतीयिनो नेष्टोन्नेता पत्नीः ॥ १४ ॥ नेष्टृमुख्यान्पादिन
उन्नेता ॥ १५ ॥ स एव पत्नीः ॥ १६ ॥ अदीक्षित उन्नेतारमध्वर्युरन्वेन समेत्य
पर्यङ्गेन समीयात् ॥ १७ ॥ एवं समानजातीयेन तृणान्तर्धानेन सर्वानलुक्रा-
मति[11] ॥ १८ ॥ दीक्षिता इमे ब्राह्मणा इति सर्वानावेदयति ॥ १९ ॥ नामगोत्राएयु-
क्त्वा त इन्द्राग्निभ्यां दीक्षां प्राहुरित्याह ॥ २० ॥ प्रवरणवेलायाँ सकृदाश्राव्य सर्वा-
न्वृणीते । समार्षेयाणाँ समाननामधेयानां च सकृद्वचनम् ॥ २१ ॥ कर्मणो ऽवि-
प्रतिपत्त्येन सर्वे याजमानं कुर्वन्ति पराङ् गृहपतिरेव यथा यूपाञ्जनमग्निमन्थ-
नमग्निपरिमार्णं याज्येति ॥ २२ ॥ दीक्षिता सर्वतो यजमाना इति शमयन्ति ॥ २३ ॥

1 The ms first hand प्रमहिन॰.

2 The ms ॰मान॰.

3 ? To be emended to चैककार्यांश्च ?

4-4 Hopelessly corrupt.

5 ?

6 The ms ॰न्ते. Cp Āp XXI. 2. 12.

7 The ms second hand ॰पूर्व्येण.

8 MS I. 2. 7. 16. 8

9 The sūtra is partly unintelligible.

10 The ms ॰याणोमेकोग्नि first hand, ॰माणामेकोग्नि second hand.

11 ? The ms चम इष्ट्वा

12 In place of वा the ms वद्वो first hand, वसवो second hand

एकँ रुक्मँ सर्वे प्रतिमुञ्चन्ति तिव्यपासं[1] च क्रामन्क्रामन्ति ॥ २४ ॥ बहुँ राजानं क्रीणाति ॥ २५ ॥ षोडशिकी राजक्रयणी ॥ २६ ॥ अतिग्राह्याणां प्रयुङ्क्ते ऽप्रायणे पात्रप्रयोजनं प्रातःसवने ग्रहणं च माहेन्द्रमनु होमः ॥ २७ ॥ प्रायणीयो ऽतिरात्रः प्रथमसँस्था ॥ २८ ॥ द्वादशभागँ राज्ञो ऽवहरति ॥ २९ ॥ नित्येन मित्वा

वायुरसि प्राणो नाम सवितुराधिपत्ये ऽपानं मे दाः ॥

चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दाः ॥

रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दाः ॥

ऋतमसि सत्यं नामेन्द्रस्याधिपत्ये क्षत्रं मे दाः ॥

भूतमसि भव्यं नाम विश्वेषां देवानामाधिपत्ये ऽपामोषधीनां गर्भं धाः ॥

ऋतस्य त्वा व्योमन ऋतस्य त्वा विभूमन [ ऋतस्य त्वा सत्याय ] ऋतस्य त्वा विधर्मण ऋतस्य त्वा ज्योतिष इति दश सप्त नवः ॥ ३० ॥ तासु द्वाभ्यां मिमीते । द्वितीयं नित्येन मित्वाय पुरो भुरिति[2] पञ्चमीं ॥ ३१ ॥ प्राणग्रहपर्यायाणां प्रथमेन मिमीते— प्रजापतिर्गृहीतेनं[3] त्वया प्राणं गृह्णामीत्येतेन[4] धर्मेण व्यत्यासं प्रायणीयोदयनीययोर्दशमे चाहनि ॥ ३२ ॥ यथाकालमुत्तरस्मिन्नहनि वत्सानपाकरोति ॥ ३३ ॥ अदक्षिणानि सत्त्राणि ॥ ३४ ॥ द्वादशशतं दक्षिणा अहन्यहन्यहीने[5] ॥ ३५ ॥ सत्त्रे तु दाक्षिणौ होमौ हुत्वाहरहः कृष्णाजिनानि धूत्वा[6] दक्षिणापथेन प्रजान्ति—इदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय [ ददामीति[7] ] ॥ ३६ ॥ पत्नीसँयाजान्तान्यहान्योत्तरस्मादह्नः ॥ ३७ ॥ पुरस्ताद्यज्ञायज्ञियस्य वसतीवरीर्गृह्णाति ॥ ३८ ॥ हारियोजनान्तिमैषप्रेषित आग्नीध्रस्तिष्ठन्स्तुत्यामावेदयति—इन्द्राग्निभ्यां व स्तुत्यां प्रब्रवीमि मित्रावरुणाभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छेति ॥ ३९ ॥ [ ब्रह्मा वाचँ ] यच्छत्या वसतीवरीणां परिहरणात् ॥ ४० ॥ अन्यद्दं पृष्ठ्यँ षडहमुपयन्ति[11] ॥ ४१ ॥ वसतीवरीः परिहृत्य त्रिवृतमग्निष्टोममुपयन्ति रथन्तरपृष्ठम् ॥ ४२ ॥ माहेन्द्रकाले रथँ शब्दवन्तं बहिर्वेदि दक्षिणतो ऽभ्यतिवर्तयन्ति ॥ ४३ ॥ श्वो भूते पञ्चदश उक्थ्यो बृहत्पृष्ठः ॥ ४४ ॥ माहेन्द्रकाले दुन्दुभिमाघ्नन्ति ॥ ४५ ॥ श्वो भूते सप्तदश उक्थ्यो वैरूपपृष्ठः ॥ ४६ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्विधुँमुद्गात्रे प्रयच्छति ॥ ४७ ॥ श्वो भूत एकविँशः षोडशी वैराजपृष्ठः ॥ ४८ ॥

1 ? Thus the ms.

2 The text is corrupt.

3 MS II. 7. 19 105. 15

4 But the Samhita (ib 104, 3) °गृहीतया

5 ? The ms दक्षिणान्यहन्यहीने.

6 The ms धूत्वा वा.

7 The ms second hand has instead नयामीति (after Ap)

8 The ms °न्युत्त°.

9 The ms second hand °यज्ञीयं.

10 The ms तिस्र (for तिष्ठन्).

11 The ms पनयंति (for उपयन्ति).

12 The word, though corrupt, should mean "a fan".

अमा आयूंषि पवसे[1] इत्याग्नेयमतिग्राह्यं गृह्णाति ॥ ४९ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्नरणिशकलमुद्गात्रे प्रयच्छति ॥ ५० ॥ उद्गातुरूरावग्निं मन्थन्ति ॥ ५१ ॥ समाप्ते स्तोत्रेऽध्वर्युर्भवतं नः समनसावित्यनुप्रहृत्य प्रेद्धो अग्ने इत्यभिजुहोति[4] ॥ ५२ ॥ न्यूङ्खयमूर्ध्वं[5] भवति ॥ ५३ ॥ अग्नेश्च त्वा ब्रह्मणश्चेत्यतिग्राह्यं हुत्वाग्न आयुष्करोति[7] भक्षयति ॥ ५४ ॥ मयि मेधा मयि प्रजा मय्यग्निस्तेजो दधात्वित्यात्मानं प्रत्यभिमृशति ॥ ५५ ॥ मयीन्द्र ओजो दधातु मयि सूर्यो भ्राजो दधात्वित्युत्तरयोः ॥ ५६ ॥ श्वो भूते त्रिणव उक्थ्यः शाक्वरपृष्ठः ॥ ५७ ॥ ओजस्तदस्य तित्विषे इत्यैन्द्रमतिग्राह्यं गृह्णाति ॥ ५८ ॥ माहेन्द्रस्य स्तोत्रमुपाकरिष्यन्तोयावकसुद्गात्रे प्रयच्छति ॥ ५९ ॥ इन्द्रस्य च त्वा वज्रस्य चेत्यतिग्राह्यं हुत्वेन्द्रौजस्करोति[9] भक्षयति ॥ ६० ॥ श्वो भूते त्रयस्त्रिंश उक्थ्यो रैवतपृष्ठः ॥ ६१ ॥ अदब्धस्य केतवे इति सौर्यमतिग्राह्यं गृह्णाति ॥ ६२ ॥ ऋतेव्यापापेण स्वयमृतुभिर्ऋत्व्यवधानेति[13] यजत्यध्वर्युः ॥ ६३ ॥ भजेत्युके ऽध्वर्युर्यजते ॥ ६४ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] प्रथमं खण्डम् ॥

ये यजामहे ॥ अश्विनाध्वर्यू आध्वर्यवात् ॥ ऋतुना सोम पिबतम् ॥
अश्विना पिबतं नूनं दीद्यग्नी शुचिव्रता ।
ऋतुना यज्ञवाहसा ॥

इति समूढेषु ॥ १ ॥ अव्यूढे सलिलं गायत्र्युयं[14] द्वितीयं कुर्वीत ॥ २ ॥ माहेन्द्रस्य काले प्रसक्वसि[15] वत्सगवाँ साँवाशिने[16] कुर्वीत ॥ ३ ॥ सूर्यस्य च त्वौषधीना चेत्यतिग्राह्यं हुत्वा सूर्य भ्राजस्करोति[17] भक्षयति ॥ ४ ॥ [तृतीय]सवने वालखिल्यामैत्रावरुणो विहरति—वृषाकपिं ब्राह्मणाच्छंसी शंसेत्येवयामरुतमच्छावाकः शिक्ये प्रतिगरः ॥ ५ ॥ समाप्ते ऽहनि वाचं यच्छत्या रसप्राशनात् ॥ ६ ॥ दीक्षिताः प्राश्नन्ति मधु ॥ ७ ॥ अहीने दीक्षितः ॥ ८ ॥ संस्थिते पृष्ठ्यषडहे छन्दोमानुप

1 MS I. 3. 31
2 MS I. 2. 7: 16. 8.
3 MS II. 10. 6: 139. 5
4 The ms इत्यग्नि जुहोति
5 The ms inserts भवत before ऊर्ध्वं.
6 MS IV. 7. 3: 96. 6, 7, 11 (॰कार for our ॰कर)
7 The ms आयुस्वेति. See MS ib 10
8 MS I. 3. 32
9 The ms श्वो भूते मा॰
10 The ms करिष्यन्तयोरवकामिनि सु॰.
11 MS I. 3. 33
12 ? The ms पृथि॰ ऋतव्यानाम is perhaps the same as ऋतुपात्र.
13 Hopelessly corrupt
14
15 We expect the word to mean "outside the sadas"
16 ? The ms वन्सान्विथमिनामिन
17 Cp MS IV. 7. 3: 96. 9, 13.

यन्ति ॥ ९ ॥ त्रीण्युक्थ्यानि ॥ १० ॥ बृहत्पृष्ठावभितो मध्ये [रथन्तरपृष्ठः] ॥ ११ ॥ रथन्तरपृष्ठश्चतुर्थः ॥ १२ ॥ अविवाक्यं नाम स्मरन्ति ॥ १३ ॥ मन्यतिशिल्पे[2] ब्रह्मा गृहपतिरुपद्रष्टा वा चित्रतया तु या वाह्रिरक्षरँ व्यञ्जनैस्तानि होता परोक्षमनुष्टुभँ संपादयेत् ॥ १४ ॥ समाप्ते ऽहन्याहवनीयमुपतिष्ठन्ते—

अयँ सहस्रमनवे दृशः कवीनां मतिज्योतिर्विधर्म ।
ब्रध्नः समीचीरुषसः समैरयत् ॥
अरेपसः सचेतसः स्वसरे मन्युमन्ताश्चितो गोभोः ॥

इति ॥ १५ ॥ निधनमुपयन्ति ॥ १६ ॥ हविर्धाने मानसं ग्रहं गृह्णाति—पृथिव्या पात्रेण समुद्रँ रसामनुपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीति ॥ १७ ॥ स्तुतशस्त्रयोर्भक्षयति ॥ १८ ॥ आसादनभक्षणं[5] मनसा कुर्वीत ॥ १९ ॥ परिधानीयाँ संपाद्याभिमुखो होतारमुपविशति ॥ २० ॥ आमन्त्रयते होता—अध्वर्यो मक्ष वदिष्याव उच्चैस्तराँ होतरित्यध्वर्युः ॥ २१ ॥ चित्तिः स्रुगध्वर्यो होता चित्तमाज्यमध्वर्युरामन्त्रयते होतर्मक्ष वदिष्याव इत्युच्चैस्तरां तथाध्वर्यो इति तिष्ठति ॥ २२ ॥ ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामह इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । एष वै होतः[7] प्रजापतिः सप्तदशः ॥ २३ ॥ उँपयथा होता येषाँ वै होतः[8] प्रजापतिः सप्तदशो यज्ञे ऽन्वायत्तः ॥ २४ ॥ यद्यनुवाक्याया एति यदि याज्याया अतश्चेदेव नैति । नास्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति[9] ॥ २५ ॥ अरात्स्म होतरिति ॥ २६ ॥ एतेन धर्मेण चतुर्होतृनाचष्टे ॥ २७ ॥

अर्वाञ्चमद्य यय्यं नृवाहणँ रथँ युञ्जाथामिह वाँ विमोचनम् ।
पृङ्क्तँ हवीँषि मधुना हि कं गतमथा सोमं पिवतँ वाजिनीवसू ॥

इति गृहपते यजेत्युक्ते गृहपतिर्यजति—ये यजामहे ॥ अग्निं गृहपतिं गार्हपत्यात् ॥ सुगृहपतिस्त्वयाग्ने ऽयँ सुन्वन्यजमान स्यात्सुगृहपतिस्त्वमनेन सुन्वता यजमानेन॥ अग्निर्गृहपतिर्गार्हपत्यादृतुना सोम पिबतु गार्हपत्ये ऽनु सम्नतुना॥ अय हि गौरसि॥ देवायते यजेति समुद्देष्यन्वपूढे गायति[10] ॥ २८ ॥ यदि स्याद्यपेतेभ्यश्च त्यर्येति नैषाँ यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति

1 ?
2 The passage is for the major part unintelligible.
3 The ms स्वरेस्वतरिसंवमनाथित्ता.
4 The mantra is corrupt. The only other known version is Āp XXI. 10 2
5 ? The ms मद्वयत्वामवया.
6 MS I. 9 1 131. 1.
7 Not in the Saṃhitā.
8-8 Our text is corrupt. For उप… होत the Saṃhitā has एष वै.
9 Sutras 23, 24, 25 are from MS I 4. 11 59 20—60. 3.
10 There is great confusion in this sūtra.

॥ २६ ॥ अरात्स्म होतरित्यन्तमुच्चैरोमध्वर्यो तथाध्वर्यो इति प्रतिचारः ॥ ३० ॥ प्रदेश प्रचर्य ग्रहशेषं प्रजापतिपीतं भक्षयन्ति ॥ ३१ ॥ तार्तीयसवनिको भक्षमन्त्रः ॥ ३२ ॥ यत्सेमीदते स उपह्वः ॥ ३३ ॥ उप स्वजा वरुणैमित्यौदुम्बरीमन्वारभन्ते ॥ ३४ ॥ वागैतु वागुपैतु वाक्समेतूप मैतु वाक् ॥ भूर्भुवः स्वरित्यन्वारभ्य वाचं यच्छन्त्याधिवृत्तसूर्योदा वा नक्षत्रदर्शनात् ॥ ३५ ॥ वाचं विसृज्याग्नीध्रीयमुपतिष्ठन्ते—

ध्रुव तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तं तमिद्धतं वज्रेण तं तमिद्धतम्।
दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत्।
अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट [विश्वत ]॥

इति भ्यो भूत उदयनीयो अतिरात्रः ॥ ३६ ॥ स प्रायणीयेन व्याख्यातः ॥ ३७ ॥ होता कर्माणि कुरुते ॥ ३८ ॥ समूढं वैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः। इतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथाग्रायणाग्रमिति विरभ्यस्य ॥ ३९ ॥ व्यूढस्यैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ। इतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः। अथ द्वे आग्रायणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रायणमथ द्वे ऐन्द्रवायवाग्रे ॥ ४० ॥ व्यूढस्यैतस्मिन्पृष्ठ्ये षडहे[6] ॥ ४१ ॥ छन्दोगानां[7] जगत्यः प्रातःसवनं भजन्ते गायत्र्यो माध्यन्दिनं त्रिष्टुभस्तृतीयसवनम्। छन्दोभिरव्यूढेनानुष्टुभः[8] प्रातःसवनं भजन्ते जगत्यो माध्यन्दिनं गायत्र्यस्तृतीयसवनम् ॥ ४२ ॥ पवमानाभिमन्त्रणं भक्षणमिति यथाछन्दः ॥ ४३ ॥ कृष्णशीर्षोऽग्नेय इत्यैकादशिनाः[10] ॥ ४४ ॥ तानन्वहं विहृतानालभन्ते ॥ ४५ ॥ ऐन्द्राग्नेयमुदयनीयः ॥ ४६ ॥ उदवसानीयाभिरिष्ट्वा ज्योतिष्टोमैः पृष्ठशमनीयैरतिरात्रैर्यजेरन् ॥ ४७ ॥ पृष्ठ्यव्यसने[13] पृथगवसानीयाभिरिष्ट्वा ज्योतिष्टोमेन यजेरन् ॥ ४८ ॥ द्वादशाहेन सत्राहीना व्याख्याताः ॥ ४९ ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] द्वितीयः खण्डम् ॥

1 ? To be emended to प्रतिगर ?

2 The ms यत्स॰.

3 ? Perhaps to be emended to उपस्तम्भरणम्.

4 The ms दर्मा दर्षिष्ट

5 ? Perhaps to be emended to वपन कर्माणि.

6 ? The ms पृष्ठ्यं हे first hand, पृष्ठ्याहे second hand

7 Probably to be emended to छन्दोमाना

8-8 ? The ms छंदोभि कि व्यूढेनानान्युष्टुभ first hand, छन्दोभिरव्यूढेनानुष्टुभ second hand.

9 ? The ms पवमान त्रि॰

10 For the entire list see MS IV 7, 8 103 7-9

11-11 ? The ms अजयाग्नेय इन्यस्यादत्तासा॰ first hand, अज आग्नेय इन्युदत्ता॰ second hand

12 The ms पृष्ठ्यैः दर्शनाये तिराचे

13 ?

गवामयनम् ॥ १ ॥ पौर्णमास्याश्चतुरहे पुरस्ताद्दीक्षन्ते ॥ २ ॥ तामिस्रस्या-एम्याम्‌त्विग्भ्यो[1] ऽग्निष्टोमस्य पञ्चम्यां प्रसवः ॥ ३ ॥ समानः प्रायणीयः ॥ ४ ॥ उक्थ्यो द्वितीयमहरग्निष्टोमो वा ॥ ५ ॥ अन्वहमभिप्लवँ षडहमुपयन्ति ॥ ६ ॥ ज्योतिरग्निष्टोमो रथन्तरपृष्ठो गौरुक्थ्यो बृहत्पृष्ठ आयुरुक्थ्यो रथन्तरपृष्ठः पुनर्गौश्चायुश्च ज्योतिरग्निष्टोमो रथन्तरपृष्ठ एव[2] ॥ ७ ॥ चतुरो ऽभिप्लवानुपयन्ति ॥ ८ ॥ पृष्ठ्यः । स मासः ॥ ९ ॥ तांश्चतुरो मासानुपयन्ति ॥ १० ॥ त्रयो ऽभिप्लवाः पृष्ठ्यो ऽभिजित्स्वरसामान उक्थ्या वाग्निष्टोमा वा ॥ ११ ॥ तेष्वावृत्ता संततिः[4] ॥ १२ ॥ अतिग्राह्यं गृह्णाति ॥ १३ ॥ उपयामगृहीतो ऽस्यग्रयस्त्वौषधीभ्य इति गृहीत्वाग्रय ओषधीभ्य स्वाहेति प्रथमे ऽहनि जुहोति ॥ १४ ॥ ओषधीभ्यस्त्वा प्रजाभ्य इति गृहीत्वौषधीभ्यः प्रजाभ्य स्वाहेति द्वितीये ॥ १५ ॥ प्रजाभ्यस्त्वा प्रजापतय इति गृहीत्वा प्रजाभ्यः प्रजापतये स्वाहेति तृतीये ॥ १६ ॥ स मासः[5] । स पूर्वः [पक्षः] ॥ १७ ॥ श्वो भूते विषुवान्दिवाकीर्त्यो ऽग्निष्टोमः ॥ १८ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ १९ ॥ अगृहीतान्संततान्गृहीत्वोदु त्यं जातवेदसमिति[6] स्तोत्र आदित्यँ गृहीतान्संततान्गृहीत्वा वाचस्पतिमिति वैश्वकर्मणमिति[7] ॥ २० ॥ आदित्यँ श्वो भूते वैश्वकर्मणँ व्यत्यासं गृहीत्वा महाव्रतात् ॥ २१ ॥ उभे महाव्रते ॥ २२ ॥ सौर्यं[8] श्वेतमजँ सवनीयं तन्त्रमुपालम्भमारभेरन् ॥ २३ ॥ मागस्तमयादहः सँस्थापयन्ति ॥ २४ ॥ वैश्वकर्मणं महीमू षु मातरमित्या[9]हन्यम् ॥ २५ ॥ सूर्यो देवं इत्यस्तमिते जुहोति ॥ २६ ॥ पृष्ठ्याभिप्लवान्मासाँस्त्वावृत्तांनुत्तरस्मिन्पक्ष उपयन्ति ॥ २७ ॥ विषुवतमुपेत्यावृत्तांश्च स्वरसाम्न उपयन्ति ॥ २८ ॥ विश्वजितं पृष्ठ्यं त्रीनभिप्लवान् ॥ २९ ॥ चतुरो मासानुपयन्ति ॥ ३० ॥ त्रीनभिप्लवानायुर्गोर्दशाहो महाव्रतमिति द्विसंभार्यताम् ॥ ३१ ॥ एकसंभार्यता हविर्नामृद्धौ[10] विश्वजितः पञ्च मासानुपेत्य द्वावुपप्लवावायुर्गौर्दशाहो महाव्रतमुपयन्ति तेन स्वावृत्तान्स्वरसानुपयन्ति ॥ ३२ ॥ विश्वजितं पृष्ठ्यं त्रीनभिप्लवांश्चतुरो मासानुपेत्यैन्द्रवायव- शुक्र आग्रायण इति ग्रहाग्राणि नैकमावर्तं[11] षण्मासान् ॥ ३३ ॥ अथ शुक्राग्रे द्वे विषुवाने ॥ ३४ ॥ आ-

1 Some words seem to be missing

2 The ms first hand °पृष्ठो व Perhaps to be emended to बृहत्पृष्ठो रथन्तरपृष्ठो वा.

3 The ms तानुमद्राप° first hand, तान्पंचमासानुप° second hand

4 The ms अगृहतात्संतता first hand, अगृहंतं्ता second hand

5 The ms पचमासा .

6 MS I 3 37. 43. 6

7 There is great confusion in the text of this sūtra

8 MS IV 10, 1, 144 10

9 As the mantra is not derived from MS, we expect it to be read sakala pāṭhena

10 We expect पृष्ठ्याभिप्लवानावृत्तान्.

11 )

वृत्योत्तरस्मिन्नुपक्रामम् ॥ ३५ ॥ अपि वा यथा पृष्ठे प्रतिकृतो यथाभिप्लवे स्वरसामे च ॥ ३६ ॥ शेषे यथादिष्टम् ॥ ३७ ॥ आग्नेयाय सवने ऐन्द्राग्नौ ॥ ३८ ॥ अपि वा विहृतानैकादशिनानावर्तमा दशरात्रस्य चतुर्थादहः[3] ॥ ३९ ॥ वैष्णवँ वामनं चतुर्थे ऽहन्यैन्द्राग्नं पञ्चमे । वैश्वदेवँ षष्ठे । द्यावापृथिव्यं प्रथमे छन्दोमे । तस्याश्वतरवत्सँ वायवे नियुत्वते द्वितीये । अविँ[4] वशा[मुत्तमे । मैत्रावरुणी[4*] वशा]मविवाक्ये । प्राजापत्यं तूपरं महाव्रते ॥ ४० ॥ अपि वा प्रायणीयोदयनीययोर्विभक्तानैकादशिनानालभेरन्नैन्द्राग्नानन्तरौ ॥ ४१ ॥

इति द्वादशाहे [द्वितीये ऽध्याये] तृतीयं खण्डम् ॥

पशूत्सर्गिणामयनं[5] कुर्युर्द्वितीयस्य मासस्य प्रथममहरुत्सृजेरन्नपि चोत्तरेषां मासानां प्रथमान्याभिप्लविकान्यर्धमासेभ्यस्त्रयो ऽभिप्लवास्तेषां मध्यमस्य प्रथममेकसंभार्यं द्वयोरभिप्लवयोः ॥ १ ॥ अपि वा यदहः पूर्णमास्यमामावास्यँ वा तदहरुत्सृजेरन् ॥ २ ॥ श्व उत्स्रक्ष्यन्त इतीन्द्राय वत्सानुपाकुर्वन्ति ॥ ३ ॥ श्वो भूते प्राजापत्यं पशुमालभेरन् ॥ ४ ॥ तस्य वपोपर्याग्नेयेनाष्टाकपालेन सवनीयेनाष्टाकपालेन वैश्वदेवेन वारुणेन्द्रेणेति[7] प्रचरति ॥ ५ ॥ माध्यन्दिनस्य सवनस्य स्थाने पशुपुरोडाशैः [प्रचर्यै]कादशकपालेन सवनीयेनैकादशकपालेन मरुत्वतीयेनैकादशकपालेन वारुणेन्द्रेणेति प्रचरति ॥ ६ ॥ तृतीयसवनस्य स्थाने पशुना प्रचर्य सवनीयेन द्वादशकपालेन वैश्वदेवेन द्वादशकपालेन वरुणाग्निमारुतेनेति प्रचरति ॥ ७ ॥ पृषदाज्येन चरित्वा पत्नीः सँयाजयन्ति ॥ ८ ॥ अनुसवनमेके[8] पयः समामनन्ति प्रतिधुक्[9] प्रातःसवने शृतं[10] माध्यन्दिने दधि[11] तृतीये सवने ॥ ९ ॥ यदि दीक्षासु प्रदीक्षितारिततस्ते विहारं कृत्वा दण्डप्रदानान्ते ऽग्निमभ्यस्य वाग्यतमयेदयेयद्याग्नीध्रीये प्रणीतौ यदीक्षितान्तरिते श्वो विहारं करोति कथं वेदिसदो हविर्धानं सोमप्रणयनामेति परिहासं न्युपाय

1 ! The ms first hand स्वसामम च
2 !
3 The ms first hand अपिविहृत्य नैकादशानिनावर्तमान दशरात्रस्य चतुरादहो The second hand is worthless
4 After अन्तरा the ms adds गवामयनम्.
5 The ms °त्सर्गिणो मयनं
6 The ms चपोप° first hand, वपोत्प° second hand.
7 The ms वारुणादयैंद्रेणेति.
8 We have not been able to identify these "eke"
9 The ms प्रतिस्वक्.
10 The ms स्तनं.
11 The ms दधा
12 From here upto the end of this section the entire passage is unintelligible, and hence we had to leave it unpunctuated

याज्ञाग्नी पार्श्वतः शालामुखीयस्याहवनीयं प्रतिष्ठाप्य तस्मादौत्तरवेदिकं प्रणये- दाग्नीध्रीयँ यथस्याग्नीध्रीयमाहवनीयशेषँ शालामुखीयेन सँसृजत्यभिभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यत्यग्निभ्यामग्निँ सँसृजति सर्वत्र समानशीलसुत- पासुपक्षेत ॥

इति द्वादशाहे [ द्वितीये ऽध्याये ] उत्सर्गिणां चतुर्थं खण्डम् ॥

अग्निष्टोमँ व्रतपृष्ठं महाव्रतम्[1] ॥ १ ॥ उदिते प्रातरनुवाकमुपाकरोति ॥ २ ॥ दधिग्रहेण प्रचर्योदाभ्यं दधिग्रहपात्रेण गृह्णाति—अग्नये त्वा गृह्णामीति[2] पर्यायैः ॥ ३ ॥ त्रीनँशून्प्रवृह्य निग्राभ्याणामपत्यानामँशून्वतुराधूनोति—रैशीनां त्वा पत्मन्नाधूनोमीति[3] द्वाभ्यां [ द्वाभ्यां ] पर्यायाभ्याम् ॥ ४ ॥ अग्निः प्रात- रिति[4] गृह्णाति । उपयामगृहीतो ऽसि शुक्रं त्वा शुक्र शुक्रायेति[5] च ॥ ५ ॥ आ समुद्रां इत्यु- त्तिष्ठति ॥ ६ ॥ वसूनामाधीताविति[6] जुहोति ॥ ७ ॥ उशित्त्वं देव सोमेति[7] पर्यायैर- शुष्कानँशूनभ्यस्यति ॥ ८ ॥ गोरिर्यीतमुद्गाता गायति पुरस्तादुपाँश्वभिषयस्याँशु- [ना]वृत्ते ग्रहपात्रे ॥ ९ ॥ वरं दत्त्वा सकृदभिषुत्य सकृद् गृह्णात्यभिप्राणन् ॥ १० ॥ पराचीनेन प्राणेतेति[8] ब्राह्मणव्याख्यातम् ॥ ११ ॥ अभ्यग्रामं गृह्णाति जुहोति च ॥ १२ ॥ यदि व्यश्वान्याद्धिरण्यमभि व्यथान्यात् ॥ १३ ॥ कया नश्चित्र आभुव- दिति[9] मनसा प्रजापतय इति[x] गृहीत्वा वषन्ने वा यदीमन्विति[x] जुहोति ॥ १४ ॥

आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अधि ॥
अमृतमसि ॥ प्राणाय त्वेति हिरण्यमभि व्यनेयात् ।
इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो धातो बृहस्पति ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

इत्युदकँ स्पृशति ॥ १५ ॥ वासो ऽधीवासश्वतस्रो धेनूर्द्वादश [ वा ] हिरण्यं चैतेषामेकं दानम् ॥ १६ ॥ अँशावदाभ्ये च सर्वयज्ञेषु ॥ १७ ॥ आग्र- यणवतावदाभ्यो ग्रहीतव्यः सत्रे साहस्रे सर्ववेदसे सर्वस्तोमे सर्वपृष्ठे विश्वजिति वाजपेये राजसूये ऽश्वमेधे तेषु बुभूषता ॥ १८ ॥ अतिग्राह्यान्गृह्णाति— उपयाम- गृहीतो ऽसीन्द्राय त्वार्कवते जुष्टं गृह्णामीत्यनुषजेत् ॥ १९ ॥ इन्द्रमिद्गाथिनं इति पूर्वार्धे ।

1 The ms अग्निष्टोमव्रतं पृष्ठ्यो मह व्रतं दिवा- कीर्त्य.
2 MS I, 3, 36
3 MS IV 7 7. 103, 16 sqq
4 MS II, 13, 9 159 4.
5 Prof. Caland suggests प्राजापत्यया (for प्रजापतय इति) after Āp XII, 8, 9.
6 MS II, 13, 5 154, 4
7 ! The ms आत्यदाभ्ये च वा ( second hand).
8 ! The ms first hand बुभूषतावर्.
9 MS II, 13, 6 154, 15.

